# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT [COLLEGE]

UNDER THE SUPERINTENDENCE OF

G THIBAUT, PH[.D.]

*No. 145.*




# साङ्ख्यायनगृह्यसङ्ग्रहः ।

कौसुंवरवास्तव्यपण्डितवरवासुदेवविरचितः ।

काव्यतीर्थ-न्यायोपाध्यायपदवीमता

श्रीसोमनाथोपाध्यायेन संशोधितः ।

कौषीतकिगृह्यसूत्राणि च ।

रत्नगोपालभट्टेन संशोधितानि ।

# SÂNKHYÂYANAGRIHYA SANGRAHA,

BY PANDITA VASUDEVA;

EDITED BY


BENARES

*Published by the Proprietors Messrs. Braj B. Das & Co.*

AND SOLD BY H D GUPTA,

*Secretary, Choukhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press

By Harikrishna Das,

BENARES.

1908

# सूचीपत्रम् ।

| | रु० | आ० |
|---|---|---|
| गणपाठ | ० | ४ |
| गोलप्रकाशः | २ | ८ |
| गंगालहरी | ० | १ |
| गुरुसारणी | ० | ४ |
| जातकतत्त्वम् | ० | १२ |
| तत्त्वदीप | ० | १ |
| तर्कसंग्रहः | ० | १ |
| दत्तकमीमांसा | ० | ८ |
| धर्मशास्त्रसंग्रहः | ० | १ |
| धातुपाठः ( शिला -) ) | ० | २ |
| धातुरूपावली ( शिला )॥ ) | ० | १ |
| परिभाषापाठः | ० | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ |
| प्रथम परीक्षा | ० | २ |
| प्रथमपुस्तक हिन्दी | ० | १ |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ |
| फक्किकाप्रकाशः | ० | ८ |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ |
| मनोरमा शब्दरत्नसहिता | ७ | ० |
| मुहूर्तमार्तण्डः सटीक | ० | ८ |
| लघुकौमुदी टिप्पणीसहिता | ० | ३ |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० |
| वसिष्ठसिद्धान्तः | ० | १ |
| विष्णु सहस्रनाम | ० | १ |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० |
| शब्दरूपावली | ० | ० |
| शृङ्गार सप्तशती | १ | ८ |
| समासचक्रम् | ० | १ |
| समासचन्द्रिका | ० | १ |
| सरस्वतीकण्ठाभरणम् | ३ | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | १ | ८ |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ० |
| उपसर्गवृत्ति | ० | १ |
| क्षेत्रकौमुदी | ० | ६ |
| क्षेत्रसंहिता | १ | ० |

ॐनमः श्रीवेदपुरुषाय
श्रीवासुदेवविद्वद्वरविरचितः
साङ्ख्यायनगृह्यसङ्ग्रहः

ॐसाङ्ख्यायनगृह्यस्य दीक्षितश्रेष्ठसूनुना ॥
कृतैषा पद्धतिर्व्याख्या शिष्याणां हितकाम्यया ॥

प्रारब्धः कर्मसङ्ग्रहः । किमनेन प्रयोजनम् ? उच्यते । अनेन गृह्योक्तानि कर्माणि प्रयुज्यन्ते । ननु सूत्रैरेव प्रयोगः कथित एव ? उच्यते । सूत्राणि व्याख्यागम्यानि भवन्ति । यद्येवमाचार्यैर्विश्वामित्रभट्टादिभिर्व्याख्यात एव सूत्रार्थः । किं तु अस्मिन्नर्थे इतस्ततः परिभाषासूत्राणि विद्यन्ते यस्तेष्वर्थ उक्तः स मन्दधियां कर्मकाले कदाचित्तु स्मृतिविषयं नागच्छेत्ततश्च कर्महानिर्जायते च, हीने च क्रियमाणे अफलता विपरीतफलता वा स्यात् । यथाह शिक्षाकार एव—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"। इति प्रयोजनम् । अन्यच्च—सूत्रक्रमः प्रयोगेऽन्यः कर्मक्रमश्चाऽन्यः ततः प्रगुणीक्रियत इति द्वितीयप्रयोजनम् । न च व्याकरणादृते प्रयोगकाले देवता ऊहयितुं शक्यन्ते । तदेतत्प्रयोजनत्रयमपेक्ष्याऽयमारभ्यते ।

अत्र च तावत्प्रथमपावसथ्याधानं पठितम् । तद्वक्ष्यामः । अस्य च बहवः पक्षा आचार्येणोक्ताः । ते च ग्रन्थान्तरादेव ज्ञातव्याः । सायमाहुतिसंस्कारोर्ध्वयोः प्रत्यय इत्युक्तम् । तस्य विधिः कात्यायनसूत्रे पठितस्तद्वदेव व्याख्यास्यामः । वैशाख्याममावास्यायामन्यस्यां वा पुंपत्रे नक्षत्रे वा कृत्तिकादौ शोभन-

दिवसे वृद्धिश्राद्धं कृत्वा ततोऽध्वर्युर्यजमानपश्चाराग्नि दक्षिणपूर्वद्वारमन्यगारं कृत्वा पाक्षिकं च वपनं कारयित्वा ततो दम्पती स्नात्वा क्षौमे वाससी परिधत्तः ततोऽध्वर्युरग्निमानायित्वाऽन्यगारे स्थापयति। वैश्यकुलाद्वा अम्बरीषाद्वा यस्य वा गृहे प्रभूतमन्नं पच्यते एतेषामन्यतमस्मात्प्रदेशाल्लौकिकमग्निमाहृत्य स्थापयेत्। ततो दम्पती अपि हविष्यमन्नमश्नीयाताम्। ततो यजमानः उपास्तमनवेलायां "देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्याहमस्मि न तमन्तरयामि स्वम्म इष्टं स्वश्रान्तं स्वहुतमस्तु" इति जपित्वा अगारं प्रविश्य पश्चादग्नेरुपविशति। यजमानस्य दक्षिणतः पत्नी उपविशेत्। ततोऽध्वर्युः पत्न्यै अधरारणिं प्रयच्छति यजमानायोत्तरारणिम्। ततोऽस्तमित आदित्ये लोहिते बलीवर्दचर्मणि तण्डुलानां त्रिःप्रसृतिपरिमाणानि चत्वारि पात्राणि मापयित्वौदनं पक्त्वास्य मध्ये बिलं कृत्वा घृतेन पूरयेत्। ततस्तस्मिन् बिले आश्वत्थीस्तिस्रः समिधोऽभ्यज्य "समिधाग्निं दुवस्यत, घृतैर्बोधयतातिथिम्। आस्मिन्हव्या जुहोतन" ... "उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत जुषस्व समिधो मम" इत्येतासां चतसृणामृचां प्रथमया समिधमाधाय द्वितीयां जपति। ततस्तृतीयाचतुर्थीभ्यां यथासङ्ख्यं समिधावाधायानन्तरं तमोदनमध्वर्युः प्राश्य "चत्वार आर्षेया ब्रह्मौदन" इति प्रैष्यति। ततो यजमानोऽध्वर्यवे वरं ददाति। ततः पत्नीयजमानयोः पाक्षिकमशनं तथा जागरणमपि पाक्षिकमेव पत्नीयजमानयोः। अग्निश्च सकलामेव रात्रीं दीपयितव्यः। ततः प्रभातसमये तमग्निमुपशमयन्ति। स्थानं परिसमूह्योपलिप्योल्लिख्योद्धरति। ततो यजमानोऽध्वर्युमन्वारभते। ततोऽध्वर्युरुल्लिखितप्रदेशमभ्युक्ष्य हिरण्यं दत्वा तुषं दधाति। ततो मूषकोत्करम्। ततस्त्रिसप्ततिशमीप्रभृतिभिर्वेष्टयति। ततो हिरण्यं पाक्षि-

र्कम । ततो "वाचं यच्छ पूर्णाहुतेः" इति प्रैषं ददाति । यजमानो वाग्यतो भवेत् । तत उदित आदित्ये "अश्वमानय" इति प्रेष्यति । स्थितेऽश्वे पुरस्तान्मन्थनम् । ततो यजमानः जाते वरदाने "प्राणममृते दध" इत्येतं मन्त्रमकारान्तं मनसा जपन्नग्नेरुपरि बहिर्देशे नि-श्वासं कृत्वा " अमृतं प्राण आदध " इत्येतमपि मन्त्रमकारान्तमेव मनसा ध्यायन्नभिप्राणाय ततः उद्धरणम् । त-तोऽश्वपुरस्ताद्गच्छति । ततः पृष्ठतोऽग्निमानयन्ते । ततो यजमानो धूमेन स्पृश्यमानो गच्छति । ततोऽश्वस्य दक्षिणपूर्वपादेन संभारमाक्रमय्य प्राञ्चन्नीत्वा पश्चिमाभिमुखं कृत्वा अग्निना पादेन द्विः स्पृष्ट्वा सकृद्वा वा, इश्येनस्य स्थाने यजमाननामाध्वर्योरुच्चारयितव्यम् तद्यथा—"भार्गवस्य त्वा व्रतपते व्रतेनादधे वासिष्ठस्य त्वा आत्रेयस्य त्वा कश्यपस्य त्वा" एवमादि । ततो यजमानः पुरस्तात्परिक्रम्याऽग्रेर्दक्षिणत उदङ्मुखो भूत्वा इध्मस्य पूर्वार्द्धमन्वारभ्य "द्यौरिव भूम्ना पृथिवी वरिम्णा तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे" इत्येतं मन्त्रमेकारान्तं जपित्वा ततः " आयङ्गौः पृश्निरक्रमीदि " त्येताभिस्तिसृभिरुपस्थानं करोति । अपरे तु सार्पराज्ञ्युपस्थानमिच्छन्ति । ततोऽध्वर्युः अश्वमग्नेः प्रदक्षिणमानीय उत्तरत उत्सृजति । अक्षतहोममेकतन्त्रेण एतदन्तमध्वर्युर्वेदविहितं कर्म कृत्वा ततो वक्ष्यमाणेन विधिना आज्यसंस्कारं कृत्वा सव्येन कुशान् गृहीत्वा स्रिर्गृहीत्वा चतुर्थे ग्रहणे तावदाज्यं दद्यात् यावज्जुहूः संपूर्णा । ततोऽन्वारब्धे समिधमाधाय " इदं विष्णुर्विचक्रम " इत्यनेन मन्त्रेण स्वाहाकारान्तेन जुहुयात् । अथ वा प्रजापतिं ध्यात्वा तूष्णीं जुहुयात् । ततोऽध्वर्यवे वरं दत्वा वक्ष्यमाणेन विधिनाग्नये पवमानायाऽग्नये पावकायाग्नये मनायाग्नये अक्षतहोमे प्रकृतन्त्रेण

अग्नये पवमानायाग्नये पावकायाग्नये शुचये अदितये एतेषां चतुर्णां वक्ष्यमाणेन स्थालीपाकविधिना चतस्र आज्याहुतीर्हुत्वा ततः स्विष्टकृत्ततो यथोत्साहं दत्त्वा तन्त्रशेषं समाप्य ब्राह्मणभोजनम् ॥ अथारणीपक्षानङ्गीकुरुते । तत्र सूत्रोक्तयोनेः सद्य एवाग्निमाहृत्य पूर्वोक्तेषु संभारेषु स्थापयित्वा पूर्ववत् पूर्णाहुतिं हुत्वा ततः समुहनादि शेषं कर्तव्यम् । केचिद्गार्हपत्यवत्संभारादिकमिच्छन्ति । गृह्यो गार्हपत्यवदिति वचनात् । यत्रान्त्यां समिधमभ्यादध्यादिति वैवाह्यमेवेति च । तावन्मात्रमेव भवति न तु पूर्णाहुत्यादिकं किञ्चित् । तमग्निमिन्धीतेति वचनात् ।

एवमन्यतमेन पक्षेणाधाने निर्वृत्ते यावज्जीवं सायं प्रातश्च होमः कर्त्तव्यः । तं वक्ष्यामः । अस्तमित आदित्ये वक्ष्यमाणेन विधिना त्रिः परिसमूह्य "ऋतं त्वा सत्येन परिषिञ्चामी" त्यनेन मन्त्रेण त्रिः पर्युक्ष्य समिधमाधाय "अग्नये स्वाहे"ति हुत्वा "प्रजापतये स्वाहे"ति मनसा ध्यात्वा द्वितीयाहुतिमेवम् । एते द्वे आहुती व्रीहियवतण्डुलानामन्यतमेन द्रव्येण पाणिना जुहुयात् । तण्डुलानां प्रक्षालनं पाक्षिकम् । ततः समिधमाधाय पूर्ववत्पर्युक्षणं ततः प्रभाते अनुदिते आदित्ये "सत्यं त्वर्त्तेन परिषिञ्चामि" इति पर्युक्षणं "सूर्याय स्वाहे"ति प्रातहुतिः । शेषं पूर्ववत् ।

आधाने निर्वृत्ते अन्तरा या पौर्णमासी तस्यामन्वारंभणीयायाः कर्म भवति । तद्वक्ष्यामः । वक्ष्यमाणेन विधिना चरुं श्रपयित्वा "अग्नाविष्णुभ्यां स्वाहा सरस्वत्यै स्वाहा सरस्वते स्वाहे"ति हुत्वा ततोऽग्नये स्विष्टकृते हुत्वा यथोत्साहं दत्त्वा तन्त्रशेषं समाप्य ब्राह्मणभोजनम् । केषांचिदन्वारभणीयायां पञ्चहविःक्रिया । तेषां "अग्नये भगिने स्वाहा अग्नये व्रतपतये स्वाहे"ति द्वे

आहुती अधिके शेषं समानमिति ।

अन्वारम्भणीये कर्मणि निर्वृत्ते यावज्जीवं दर्शपौर्णमासावभिपद्यौ तयोः कर्मणी वक्ष्यामः । पौर्णमासं लवणं माषा येन च द्रव्येण मातश्चरुः कर्त्तव्यः एतानि नाश्नीयात् । अल्पाशनं कर्त्तव्यं मैथुनं च न सेवेत । प्रतिपद्युदितमात्र एवादित्ये शुचिः सुचित्तः शुचौ रमणीये प्रदेशे वक्ष्यमाणेनैव विधिना ग्रहणासादनादिवर्ज्जं चरुं श्रपयित्वा "अग्नयेस्वाहे"ति हुत्वा तत आज्यस्य चतुर्गृहीतं गृहीत्वा "अग्नीषोमाभ्यां स्वाहा" ततः पुनश्चरोर्गृहीत्वा "अग्नीषोमाभ्यां स्वाहे"ति हुत्वा ततः स्विष्टकृतं तन्त्रशेषं समापयेत् । अमावास्यायां पौर्णमास्यामिति व्रतस्थौ भूत्वा प्रतिपदि पूर्वोक्त एव काले चरु श्रपयित्वा "अग्नये स्वाहा" इति स्थालीपाकस्य हुत्वा तत आज्य पूर्ववद्गृहीत्वा "विष्णवे स्वाहे"ति ततश्चरोर्गृहीत्वा "इन्द्राग्निभ्यां स्वाहे"ति हुत्वा ततः स्विष्टकृतं तन्त्रशेषं समापयेत् ।

सांनाय्ययाजिनो विशेषं वक्ष्यामः। या विष्णवे सा "अग्नीषोमाभ्यां स्वाहे"ति होतव्या । या इन्द्राग्निभ्यां सा "इन्द्राय स्वाहे"ति । शेषं समानम् । ततो ब्राह्मणभोजनम् ।

प्रायश्चित्तानि वक्ष्यामः । उपशान्तेऽग्नौ ततः स्वयोनेराहरणं कृत्वोल्लिख्याभ्युक्ष्य स्थापयेत् । यदि कस्य चिक्रियमाणस्य कर्मणः कालातिक्रमो भवेत् ततो वक्ष्यमाणेन विधिना चरुं श्रपयित्वा आवापस्थाने "अग्नये पथिकृते स्वाहे"ति हुत्वा ततः स्विष्टकृत्तन्त्रशेषं समाप्य अतीतकर्म कर्त्तव्यम् । एवं सर्वेष्वपि द्रष्टव्यम् । ग्रामाग्निसंसर्गे "अग्नये विविचये स्वाहा" दवाग्निसंसर्गे "अग्नये संवर्गाय स्वाहा" श्मशानाग्निसंसर्गे "अग्नये शुचये स्वाहे"ति विद्युदग्निसंसर्गे 'अग्नये वसुमते स्वाहा" । अथ यजमानस्य कु-

टुम्बस्य व्याधिर्भवति ततो गात्रेघुकतण्डुलैश्चरुं श्रपयित्वा "इन्द्राय स्वाहा" । अथ दीर्घमध्वानं गन्तुमिच्छेत् ततः "पूष्णे पथिकृते स्वाहा" । अथ होमकाले प्रतिपदि वा समाप्ते पर्वणि व्रते सति अव्रत्येन वा मैथुनमाषादिना संव्यवहरते ततः "अग्नये व्रतपतये स्वाहे"ति । अथ व्रतकाले रोदनक्रियां करोति ततः "अग्नये व्रतभृते स्वाहे"ति । अथ यदि गृहदाहो भवेत्ततः "अग्नये व्रतपतये स्वाहे"ति । अथ व्रतकाले "क्षामवते स्वाहा" अनादिष्टे प्रायश्चित्ते उत्पन्ने सर्वप्रायश्चित्तमिति ॥

अहरहः स्वाध्यायमधीते इत्युक्तं तद्वक्ष्यामः । "अपानो देवस्सवितरि"ति द्वे "अपेहि मनसस्पत"इति पञ्च "ऋतं च सत्यं चाभीद्धादि"ति तिस्र "आदित्या अवहिसते"त्यष्टौ "इन्द्रश्रेष्ठानि द्रविणानि धेही"त्येका "हंसः शुचिषद्वसुरन्तरिक्षसदि"त्येका "नमो महद्भ्यो नमो अर्भकेभ्य" इत्येका "इन्द्रमयामह" इत्येका "अधस्वप्नस्ये"त्येका "योमे राजन्नि"त्येका " ममाग्नेवर्च " इति नव "स्वस्तिनोमिमीतामि"ति पञ्च ॥

कन्यावरणं वक्ष्यामः । कन्यामस्पृष्टमैथुनामसमानार्षेयां लक्षणोपेतां परिणयीत "अनृक्षरा ऋजवः संतुपन्था" इत्येन मन्त्रेण वरकामानागन्तुकामान्परिणेता अनुमन्त्रयते । एवं गमने गमने तावदनुमन्त्रणं कर्त्तव्यं यावदङ्गीक्रियते । ततः पुष्पफलयवानुदकुम्भं गृहीत्वा "देवदत्तोऽहं भो" इत्येवं स्वं नाम त्रिरुच्चार्य आर्यः सर्वे वा ततः प्राङ्मुखा एधाः प्रत्यङ्मुखा वरवित्तका भवन्ति । मध्ये चोदकुम्भः । ततो वरवित्तकाः अमुकगोत्रो वरवित्तकः अमुकनामानोऽस्य पूर्वजा इति पितृतो मातृतश्च त्रिपुरुषं कथयित्वा कन्यां प्रार्थयन्ते । ततः कन्यावित्तकेन प्रतिपन्ने "यथार्हलग्नोपस्थायिने अविकलेन्द्रियाय दास्यामी"ति, ततो द्वावपि "अना-

धृष्टमस्यनाधृष्यं देवानामोजोनभिशस्त्यनभिशस्तिपा अनभिशस्ते-न्यमञ्जसा सत्यमुपगेषं सुविते माधा" इत्यनेन मन्त्रेणोदकुम्भ-स्थां पूर्णपात्रीं पुष्पाक्षतफलयवहिरण्यमिश्रामाभिस्पृशतः । ततो वरावित्तसक्त आचार्यः "आनः प्रजाञ्जनयतु प्रजापतिः" इत्यनेन मंत्रेण तां पात्रीं कन्याया मूर्द्धनि करोति। ततः "प्रजां त्वयि दधामि पशूंस्त्वयि दधामि तेजो ब्रह्मवर्चसं त्वयि दधामि" इत्यने-न मंत्रेण कन्यामनुमंत्रयेत । अपरे त्वेवं व्याचक्षते । आनः प्रजामि-ति ऋक् प्रजांत्वयिदधामीति त्रीणि यजूंषि एक एवायं मंत्रः । अनेन पात्रीमेव मूर्द्धनि करोति । अनुमन्त्रणं न कर्त्तव्यम् । एवं प्रतिपन्ने वरवित्तके गृहमागत्य कथिते प्रतिश्रुतकर्म भवति तद्वक्ष्या-मः । चतुरस्रं गोमयेन स्थंडिलस्योपलेपनमुदक्संस्थां मध्ये रेखां कृत्वा तस्या उपरि प्राङ्मुखं रेखात्रयमुदक्संस्थं कृत्वोद्धृत्या-द्भिरभ्युक्ष्य ततः "अग्निमणयामि मनसा शिविना यमस्तुसङ्गमनो-वसूनाम् ।मानो हिंसीस्थविरं माकुमारं शन्नो भव द्विपदेशंचतुष्पदे" इत्यनेन मन्त्रेण एकारान्तेन अग्निं प्राञ्चं प्रणयति । तूष्णीं वा । ततः पाणिना सोदकेन प्रदक्षिणं त्रिः परिसमूह्य ततः कुशैः पु-रस्तादारभ्य प्रदक्षिणमभ्युक्षणं कृत्वा दक्षिणतोग्नेर्ब्रह्मासनमुत्तरतः प्रणीतासनं कुर्यात् । ततो ब्रह्मा उदककमण्डलुं विष्टरं वा पुरस्तादग्ने-र्नीत्वा "भूर्भुवः स्वरि"त्यनेनमन्त्रेण दर्भासने स्थापयित्वा पुष्पैर-र्चयति । ततः "को वः प्रणयती"त्यनेन मन्त्रेणाऽऽपः प्रणीय "भूर्भु-वःस्वरि"त्यनेन मन्त्रेण प्रतिष्ठाप्य ततः परिस्तरणम् । सव्येन कु-शान्गृहीत्वा दक्षिणं जान्वाच्य दक्षिणेन हस्तेन पुरस्तादग्नेस्त्रि-स्तृणाति । अथ पश्चात्त्रिभिस्त्रिरेवं त्रिभिस्तरणैर्नव भवन्ति । अथ वा पञ्चकृत्वस्तरणं कुर्यात् ततः पञ्चदश भवन्ति । अपरे त्वेवं व्या-चक्षते । सकृत् सकृत् स्तरणं कुर्यात्ततस्त्रीणि पञ्च वा भवन्ति । मूला-

न्यग्नेः प्रच्छादयति । स्तरणादनन्तरं कुशतरुणे समेऽप्रक्षीणाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशमन्तर्धाय "पवित्रेस्थ" इत्यनेन मन्त्रेण छित्त्वा प्रागग्रे कृत्वा "वैष्णव्यावि"त्यनेन मन्त्रेणाद्भिरभ्युक्षेत्। त्रीणि वा पवित्राणि कुर्यान्मन्त्रस्तु स एव । ततः पवित्राभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य "महीनां पयोसी" त्यनेन मन्त्रेणाऽऽज्यस्थाल्यादान "मिषेत्वे"त्यनेन मन्त्रेणाधिश्रयणम्। स्रुवमधोबिलं प्रतप्य संमार्जनकुशैः संमृज्य पुनः प्रतप्य निदधाति। "ऊर्जेत्वे"त्यनेन मन्त्रेण उदगुदवासनं कृत्वा दक्षिणहस्तेनोपकनिष्ठिकांगुष्ठाभ्यां पवित्रे ग्रे गृहीत्वा एवं वामहस्तेन मूले गृहीत्वोदङ्मुखे ततो मध्ये कृत्वा "सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेणवा पवित्रेण वसोः सूर्यस्य रश्मिभि"रित्यनेन मन्त्रेणाज्यमुत्पुनाति। ततः "सवितुर्वः प्रसव" इति कृतेनानेनैव मन्त्रेण स्रुवस्था अप उत्पुनाति । ततस्ताः प्रणीताः प्रापयेत् । ततस्तरणसमित्पत्रद्रव्याणां प्रोक्षणम् । अपरे त्वेवं व्याचक्षते। स्रुवस्था अप उत्पूय स्तोकं प्रणीताः प्रापयेत् शेषं प्रोक्षणं कुर्यात् । ततश्चरुपात्रमादाय पवित्रेऽन्तर्हिते कृत्वा दक्षिणहस्ते तण्डुलमुष्टिं चरुपात्रेण निर्वपति । यदैवत्यश्चरुर्भवति तमुच्चार्य "अग्नये जुष्टन्निर्वपामि"इति मुष्टित्रयं तूष्णीं चतुर्थमेवं सर्वचरुनिर्वपणे द्रष्टव्यम् । आमादनं प्रोक्षणं त्रिः प्रक्षालनं त्रिः श्रपणम् । ततः सप्तदश समिधोऽभ्याधाय "विष्णोर्हस्तोसी" त्यनेन मन्त्रेण सव्येन कुशान् दक्षिणेन मूले स्रुवं युगपद्गृहीत्वा दक्षिणं जान्वाच्य जानुभ्यामन्तरा दक्षिणं बाहु कृत्वाघारसंज्ञके द्वे आहुती जुहोति "त्वमग्नेप्रमतिस्त्वपितासिन" इत्यनेनमन्त्रेणोत्तरतः पश्चार्द्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो हुत्वा "यस्ये मे हिमवंतोमहित्वे" त्यादिना मन्त्रेण दक्षेण पश्चार्द्धादग्नेरारभ्याविच्छिन्नमुत्तरतो हुत्वा ततः "अग्नये स्वाहे"त्युत्तरमाज्यभाग "सोमायस्वाहे"ति दक्षिणं ततः

"अग्निर्जनिता स मे कल्याणश्रियं जायां ददातु स्वाहा सोमोजनितासमां कल्याणश्रियाजनिमन्तं करोतु स्वाहा पूषाज्ञा विमानममा कल्याणश्रिये पित्रामात्राभ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहा"। अनेन प्रकारेण वधूकाया नामग्रहणं कर्तव्यमेवमेनारितस्त्र आज्याहुतीर्हुत्वा "अग्नये स्विष्टकृते स्वाहे"ति स्विष्टकृते हुत्वा ततो"भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवः स्वः स्वाहे"ति महाव्याहृतयश्चतस्रः। ततो "भूर्भुवः स्वः स्वाहा"। "अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयासि अयासामनसमत्तोयासंहव्यमूहिषे अपानः कृणुहि भेषजं स्वाहे"ति सर्वमायश्चित्तसंज्ञके द्वे आहुती। ततः "प्रजापतयेस्वाहे"ति जुहुयात्। ततः सव्ये पाणौ ये कुशास्तान्दक्षिणेनाग्नेः संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति। मूले सव्येन गृहीत्वा मध्यमाज्यस्थल्यां त्यक्त्वा मूलांश्च ता"नग्नेर्वासोसी"त्यनेन मन्त्रेणाग्नौ क्षिपेत्। ततस्तिस्रः समिधोऽभ्याधाय पूर्ववत्पर्युक्षणम्। ततः "इदमापः प्रवहते"ति तृचेन मार्जनं कृत्वा पवित्रे तेनाग्नौ क्षिपेत्। ततोऽग्नेरात्मनश्चोत्तरेण नीत्वा प्रणीता अग्नेः पुरस्ताद्धस्तमानीय दक्षिणतः पश्चाद्विमुच्य ब्रह्माणं चाग्नेः पुरस्तात् आनीय विमुंचति। स्वयं च प्रतप्योऽप्यत्यानीय विमुञ्चति।

इन्द्राणीहोमकर्त्तव्यतां व्याख्यास्यामः। अत्र स्तरणाद्याघारान्ता भागाः पाक्षिकाः। उत्तरायणे शुक्लपक्षे विशिष्टव्यतीपातादिवर्ज्जिते विवाहलग्नमन्वीक्ष्य तस्मिन्निरूपिते श्वो भाविनि विवाहे परश्वो भाविनि वार्द्धरात्रेतीते अर्द्धरात्रे वा। अपरे तु व्याचक्षते। प्रहरशेषायां निशायामस्मिन् काले वाऽन्तिकोपविष्टा बन्धुस्त्रियः पतिपुत्रवत्यः सुभगा लौकिकानि गीतानि गायन्त्यः कन्यायाः स्नापनं कुर्वन्ति। चत्वारः कलशा उदकपूर्णाः सर्वौषधिपुष्प-

विमिश्राः सुगन्धद्रव्यविमिश्राश्च कार्याः । यथालाभं मङ्गल्यानि क्षिप्त्वा तैः सशिरस्कां कन्यां स्नापयित्वा कुसुम्भरक्तं नवं वा वासः परिधापयेत् । ततः उपलेपनोल्लेखनाद्याघाराज्यभागान्तं पूर्ववत् कृत्वा पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतयश्चतस्रस्तत अग्नये, सोमाय, प्रजापतये, मित्राय, वरुणाय, इन्द्राय, इन्द्राण्यै, गन्धर्वाय, भगाय, पूष्णे, त्वष्ट्रे, बृहस्पतये द्वादशमन्त्राः "राज्ञे प्रत्यनीकाये"त्येको मन्त्रः । एवमेतैर्महाव्याहृतिप्रभृतिभिः सह सप्तदशभिर्मन्त्रैः स्वाहाकारान्तैराज्याहुतीर्हुत्वा ततश्चतस्रोऽष्टौ वा विधवाः शूद्राः शाकेन सुरया स्वादुना वान्नेन तर्पयित्वा चतुष्प्रकारं नृत्यं कारयेत्ततः पाशिकस्विष्टकृत्तनो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं पूर्ववत् समापनीयम् । वरस्य च "वैश्रवणाय स्वाहा, ईशानाय स्वाहा" इति द्वे आहुती अधिके । शेषं समानम् । ततः प्रभाते ब्राह्मणभोजनम् ।

विवाहकर्म वक्ष्यामः । वरः स्नातः कृतलौकिकमङ्गलः सितचन्दनानुलिप्तः सितमाल्याम्बरधरो धृतगोरोचनः कृतपुण्याहवाचनो भूत्वा स्वगृहात् श्वशुरगृहमागत्योपलेपनोल्लिखनाद्याघाराज्यभागान्तं निर्विकल्पं करोति । तत अविधवाः सुभगाः सुरूपास्तरुण्यो याः कन्यामभ्यस्य वरं गृहीत्वा कुमार्यै दर्शनाय कौतुकमङ्गं गृहं प्रवेशयन्ति । ताश्चाभक्ष्यपातकानि मुक्त्वा यद् प्रेरयन्ति तत्कर्तव्यं यद्वापयन्ति तद्ग्राणितव्यम् । ततस्ताभिरनुज्ञातः "रैभ्यासीदनुदेया" इत्यनेन मन्त्रेण कन्यायै वासः प्रयच्छति । "चित्तिरा उपबर्हण" मित्यनेन मन्त्रेणाञ्जनभाण्डं गृह्णाति । ततः "समञ्जन्तुविश्वेदेवा" इत्यनेन मन्त्रेणाक्षीणि अञ्जयति । प्रथमं दक्षिणं ततः सव्यम् । मन्त्रश्चावर्तते । ततः "यथेयं शचीवाक्लो सुपुत्रा च यथा" इति "अविघ्नो चापायामेव त्वां मेर-

सनादिम"मित्यनेन मन्त्रेण दक्षिणे पाणौ त्रिःश्वेतां शलली द-दाति। "रूपं रूपं प्रतिरूपो बभूव"इत्यनेन मन्त्रेण सव्ये पाणावादर्शं ददाति। ततो "नीललोहितं भवती"त्यनेन मन्त्रेण ऊर्णामयम-तसीमयं वा क चिद्रक्तं क चित्कृष्णं ग्रथितमणित्रयं ग्रीवासूत्रकं कन्याया ज्ञातयो भ्रातृपितृव्यादयो ग्रीवायां बध्नन्ति। अपरे व्या-चक्षते। आजानु लम्बीकर्त्तव्यः। ततो "मधुमतीरोषधीद्याव आ-प" इत्यनेन मन्त्रेण मधुकुसुमानि ग्रीवायां तेनैव बध्नाति। वासो-दानादारभ्य ग्रीवासूत्रकं वर्जयित्वा शेषं जामाता करोति। अ-स्मिन्नवसरे मधुपर्को भवति। तस्य च विधिः कल्पे पठितः सोऽप्यत्रैव लिख्यते। कार्यासक्तः पिता भ्राता आचा-र्यो वा "कूर्चः कूर्चः कूर्चः" इत्यनेन मन्त्रेण कुशमयं कूर्चं जामात्रे ददाति। ततो जामाता कूर्चं गृहीत्वा "अहंवर्ष्मसदृशा-नां विद्युतामिव सूर्यः इदंतमधितिष्ठामि यो अस्मानभिदासती" इत्य-नेन मन्त्रेण उदङ्मुखो वा कूर्चे उपविशत्यधितिष्ठतीति वा। ततः कन्यावित्तः "पाद्यंपाद्यंपाद्यम्" इत्यनेन मन्त्रेण पादप्रक्षालनं ददा-ति। ततो जामाता "विराजोदोहोसि विराजोदोहमशीय मयिपाद्यायै विराजोदोहः" इत्यनेन मन्त्रेण पादोदकं गृह्णाति। ततः कन्या-वित्तः "अर्घ्यमर्घ्यमर्घ्य"मित्यनेन मन्त्रेणोदकं ददाति। ततो जामाता तूष्णीं प्रतिगृह्य पादयोरुपनिनयति। ततः कन्यावित्तः "आ-चमनीयमाचमनीयमाचमनीय"मित्यनेन मन्त्रेण आचमनोदकं द-दाति। ततो जामाता "आपोहिष्ठामयोभुव" इत्येताभिस्तिसृभिः प्रत्यृचं त्रिरुपस्पृशति। ततः कन्यावित्तः "मधुपर्को मधुपर्को मधु-पर्कः"इत्यनेन मन्त्रेण कांस्यभाजनसंपुटसंस्थं दधि घृतमधुभ्यां मिश्रं जामात्रे ददाति। ततो जामाता तस्यैव हस्तास्थितमुद्घाट्य "मित्रस्यत्वा चक्षुषाप्रतीक्षे"इत्यनेन मन्त्रेण एकारान्तेन दृष्ट्वा "दे-

व्यः। तस्य च विधिमुपरिष्टाद् वक्ष्यामः। अथ "मातारुद्राणां दुहितावसूना" मित्येतामृचं जपित्वा ततः "उत्सृजततृणान्यत्ति"-त्येवं ब्रूयात् ततः कन्यावित्तकेन मैत्रः पशुर्न कर्त्तव्यः। कूर्चदानादिगोरुत्सर्जनान्तं सूत्रे पठितं कर्म कृत्वा ततः कन्यामुदकपूर्वं पिता भ्राता वा ददाति। अपरे त्वागतमात्रस्यैव जामातुर्मधुपर्कं कृत्वा कन्यां दत्त्वा ततः कौतुकगृहं प्रवेशयन्ति। अन्यतरेण पक्षेण यथोक्तं कर्म कृत्वा ततस्तां गां जामात्रे ददाति। ततः पश्चादग्नेः कन्यामुपवेश्योत्तरतो वरमुपवेशयेत्। ततोऽन्वारब्धायां वधूकायां महाव्याहृतिभिश्चतस्र आज्याहुतीर्जुहोति। अपरे तु महाव्याहृतिभिस्तिस्रो जुहोति इति पठन्ति। ताश्च वराचार्याभ्यामन्यतरेण होतव्याः। ततो महाव्याहृतिहोमादनन्तरं "सम्राज्ञीश्वशुरेभवे" त्यनेन मन्त्रेण स्वाहाकारान्तेन पिता भ्राता वा तिष्ठन् प्रत्यङ्मुख आसीनायाः प्राङ्मुख्याः खङ्गाग्रेण स्रुवेण वा मूर्ध्नि घृतं जुहोति। ततो वरस्तिष्ठन्प्रत्यङ्मुख आसीनायाः प्राङ्मुख्याः "गृह्णामि ते सौभगत्वाय हस्त"मित्यनेन मन्त्रेण दक्षिणहस्तेनोत्तानेन कन्याया दक्षिणं हस्तमुत्तानं साङ्गुष्ठं गृह्णाति। ततः सावः पूषाशिवतमा मेरयस्वे"त्यारभ्य पञ्च चोत्तरा जपित्वा "अमोहमस्मि सात्वं सात्वमस्यमोहं द्यौरहं पृथिवीत्वमृक्त्वमसिसामाहं सामानुव्रता भव तावेहि विवहावहै प्रजां प्रजनयावहै पुत्रान्विन्दावहैबहूंस्तेसन्तु जरदष्टय" इति च जपति। अस्मिन्नवसरे चत्वारो ब्राह्मणा युवानः सुरूपा दक्षिणत उदङ्मुखा उपविश्य "संसृष्टं धनमुभयं समाकृत" मित्यादि आरभ्य "विजनसमदित्युत्तर" इति यावच्छ्रावयेयुः शिष्टाचारात्। ततः आचार्यो "भूर्भुवस्वरि"त्यनेन मन्त्रेणोदकुम्भं नवं पूरयित्वा पुंनाम्नः क्षीरिणो वृक्षस्याद्राणि पत्राणि सकुशानि तस्मिन्नुदकुम्भे क्षिपति। हिरण्यं च पार्श्वकम्। तं प्र-

ह्मचारिणे वाग्यताय प्रयच्छति । स ब्रह्मचारी अग्नेः प्रागुदीच्यां स्थापयित्वा दक्षिणहस्तेनान्वारभ्यास्ते । तत आचार्यः अश्मानमु· त्तरतोऽग्नेः स्थापयति । उदकुम्भपूरणादि अश्मस्थापनान्तं यावदाचार्यः करोति तावद्वरो गृहीतहस्तास्तिष्ठति । तत "एहिस्तने"। त्यनेन मन्त्रेण वरो वधूकामुत्थापयति। तत उदग्नीत्वा "एवमश्मानमातिष्ठाश्मेव त्वं स्थिरा भव अभितिष्ठ पृतन्यतः सहस्व पृतनायत" इत्यनेन मन्त्रेण अश्मानं दक्षिणपदाग्रेण आरोहति । ततो ब्रह्मचार्युदकुम्भाभ्यामन्तरेण चोदकुम्भं प्रदक्षिणं कृत्वाग्निंपर्यणीय "रैभ्यासीदनुदेयी"त्यनेनैव मन्त्रेण द्वितीयं वासो दत्वा प्रत्यङ्मुखीकरोति । ततः आचार्यो वधूकाया अञ्जलौ स्रुवेणाज्यमुपस्तृणाति । ततः पिता भ्राता वा लाजां शमीपत्रमिश्रां सूर्पाद्गृहीत्वा द्विर्ददाति । त्रिः पञ्चार्षेयाणाम् । ततो हावक उपर्युपर्यभिघारयति गृहीतशेषं च प्रत्यभिघारयति । " इयं नार्युपब्रूते लाजानावपन्तिका शिवा ज्ञातिभ्यो भूयासं चिरञ्जीवतु मे पतिः स्वाहेति" पतिर्मन्त्रं जपति । वधूश्च तिष्ठन्ती गृहीतमञ्जलिना जुहोति । अश्मक्रमणादि वासोदानवर्जितमेव द्वितीयं होममेवमेव तृतीयं कुर्यात् । कामं मनसा ध्यात्वा तूर्ष्णी चतुर्थम् । ततो जामाता वधूकाया हस्तं मुक्त्वा " इष एकपदीभव, ऊर्जे द्विपदीभव, रायस्पोषाय त्रिपदीभव, आयोभव्याय चतुष्पदीभव, पशुभ्यः पञ्चपदीभव, ऋतुभ्यः षट्पदीभव, सखा सप्तपदीभव" इत्येतैः सप्तभिर्मन्त्रैर्भवेत्यन्तैः आसनप्रदेशादारभ्य प्रागुदीच्यां दिशि सप्तपदानि क्रमयित्वा " विष्णुस्त्वानयत्वि" त्यनेन मन्त्रेण तानि अद्भिः प्रोक्ष[illegible] । अपरे तु व्याचक्षते । सप्तपदाक्रमणं हावकः कारयति । ततो वरः " आपोहिष्ठामयोभुव" इत्येताभिस्तिसृभिरुदकुम्भस्थाभिर्मार्जनं कृत्वा तत आत्मनो वधूकायाश्च मूर्धन्युदकस्य स्तोकं स्तोकं

निविश्य "गां ददानी"त्येवमुक्त्वा हावकाय गां ददाति । ततः स्विष्टकृत् । अन्येभ्योपि ग्रामब्राह्मणेभ्यो यथाशक्त्या किञ्चित् ददाति । विवाहकर्मप्रवीणा ये ब्राह्मणास्तेभ्यश्चाश्वं ददाति। अन्येभ्योपि ब्राह्मणेभ्यः किञ्चिद्दद्यात् इत्यारभ्य याज्ञिकेभ्योऽश्वं दद्यात् इति यावत्के चित्पठन्ति इति पाक्षिकमेतत् ।

गृहागमनकर्म वक्ष्यामः । गृहं नीयमानायां वधूकायामाचार्यः "प्रत्वा मुञ्चामिवरुणस्य पाशादि"त्येतं सूक्तं जपेत् । ततो यदि वधू रोदिति ततो "जीवं रुदन्तिवियन्ते अध्वर" इति वरो जपति आचार्यो वा । यदि रथेन गच्छति ततो "अक्षन्नमीमदन्त" इत्यनेन मन्त्रेणाऽक्षं वधूर्घृतेनाभ्यञ्जयति । आचार्येण सर्वमन्त्रं भणयितव्या । "शुचीतेचक्रे यात्या" इत्यनेन मन्त्रेण रथस्य दक्षिणचक्रमभ्यंज्य "द्वेतेचक्रेसूर्ये" इत्युत्तरं ततः "खेरथस्य खेनस" इत्यनेन मन्त्रेण फलवृक्षस्य सक्तां शम्यां शाखां युगच्छिद्रेषु निखनाति । प्रथमं दक्षिणयोस्तत उत्तरयोः । अथ वा अनेनैव मन्त्रेण चिरन्तनी एवाऽभिमन्त्र्य ततो "युक्तस्तेअस्तु"इत्यनेन मन्त्रेण दक्षिणस्यां धुरि बलीवर्दं युनक्ति । "युनज्मिते ब्रह्मणे काशिनाहरी"इति द्वितीयमुत्तरस्यां युनक्ति । ततः "शुक्रावनड्वाहावास्ता"मित्यनेनार्द्धर्चेन युक्तौ बलीवर्दावभिमन्त्र्य ततो वधूं वरविधा आरोप्य गच्छन्ति । गच्छमानाया यदि रथाङ्गमीषासादि भज्येत योत्त्रप्रग्रहादि वा छिद्येत ततो वधूमाहिताग्नेः गृहं प्रवेश्य ततो "अभिव्ययस्व खदिरस्यसार" मित्यनेन मन्त्रेण दारुमयं यद्रथाङ्गं तत्समारचयितव्यम् । "त्वंचिदश्वं नवाजिन"मित्यनेन मन्त्रेण रज्जुमयीं ग्रन्थिं कृत्वा "स्वस्तिनोमिमीतामश्विना भग" इति पञ्चर्चं जपति । "सुकिंशुकंशल्मलिंविश्वरूप"मिति रथमारोहन्त्यां वधूकायां जपेत् । "मानिदन्परिपन्थिन" इति चतुष्पथे मार्गे अ-

पेत् । "येनश्चक्रन्दवहतु" इति श्मशाने मार्गे जपेत् । " वनस्पते शतवल्शो विरोह" इत्यर्द्धर्चं वनस्पतौ मार्गे जपेत् । " सुगायाम् पृथिवीं स्थापनेद्म" मित्येनामृचं नावमारोहन्त्यां जपेत् । "अश्मन्वतीरीयतेसंरभध्व"मित्येनामृचं तरन्त्यां जपेत् । यद्यल्पोदका नदी भवति युक्तेनैव रथेन गच्छति तथाप्येनामेव जपेत् । ततो नदीमध्यगतायां "मूर्ध्ना ऊर्मिः " शम्याहन्त्व" इत्येतामृचं जपेत् । वधूश्च वेष्टितमुखी गच्छेत् । अत्र रथयोजनादि गृहप्रापणं यावत् किञ्चित्पठितं तत्तन्मन्त्रजातं तद्वरेण जप्तव्यं यत्कर्मजातं तद्वरेण कर्तव्यम् । ततो गृहान् प्राप्तायां वधूकायां "मिहमियं प्रजापते स-मृध्यता"मिति यजमानः "सुमङ्गलीरियं वधू"रिति मित्रः शा-कको जपेत् । अपरे तु ध्यायन्ते । पतिर्जपति । गृहप्राप्तस्य यदस्या-चार्येण पूर्वगन्धपुष्पैः कर्तव्यः । अत्र मेषः पशुः कर्तव्यः । तस्य विधिमुपरिष्टादेव प्रवक्ष्यामः । अथ गां व्यापाद्यमानां नेच्छन्ति तनस्रामपि तस्मै दद्यादिति केचिदिच्छन्ति ।

अनुद्वहोमकर्म वक्ष्यामः । अत्र स्तरणाद्याघारान्ताज्यभागाः पाक्षिकाः । उपलेपनोल्लिखनाद्याघारान्तमार्गं कृत्वा ततो लोहिते बलीवर्द्दचर्मणि वधूमुपवेशयन्ति । ततो वधूः कुशीरकारमणे प-भिर्जुहोति । "अग्निना देवेन पृथिवी लोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयामि कल्याणश्रीः स्वाहा, वायुना देवेनान्तरिक्षलो-केन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयामि अनुरूपाः कल्याणं स्वाहा श्रीः स्वाहा, सूर्येण देवेन द्यौर्लोकानां सामवेदेन वेदानां तेन त्वा शमयामि कल्याणश्रीः स्वाहा, चन्द्रेण देवेन दिशा लोकेन लोकान ब्रह्मवेदेन वेदानां तेन त्वा शमयामि कल्याणश्रीः स्वाहा" इत्येतै-श्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैश्चतस्र आज्याहुतीर्जुहुयात् । कल्या-णाशिषः स्थाने वधूकाया नामग्रहणं कर्तव्यम् । अथ वा " भू-

र्योते पतिघ्न्यलक्ष्मीर्देवरघ्नी जारघ्नी तां करोमि कल्याणश्रीः स्वाहा, भूर्वो या ते पतिघ्न्यलक्ष्मी"रिति समानम्। "स्वर्योतेपतिघ्न्यलक्ष्मी"रितिसमानम्। "भूर्भुवः स्वर्याते पतिघ्न्यलक्ष्मी"रितिसमानम्। एते चत्वारो मन्त्रा वधूनामोपलक्षिताः पूर्वेषां मन्त्राणां स्थाने वैकल्पिका भवंति। एतयोर्विकल्पयोरन्यतरेण मन्त्रचतुष्टयेन चतस्र आज्याहुतीर्हुत्वा ततः "अघोरचक्षुरपतिघ्न्येधी"त्यनेन मन्त्रेण चक्षुषी आज्यशेषेण विमार्ष्टि। ततः "कयानश्चित्र आभुव"दिति तिसृभि ऋग्भिराज्यशेषेणैव केशान्तानभिमृशेत्। "उतस्यादेव्याभिपजेति"चतस्र ऋचः पठित्वाऽन्तेस्वाहाकारमेकं कृत्वा वधूकाया मूर्द्धन्याज्यं स्रुवेण जुहोति। तत् एके नेच्छन्ति। "आतेयोनिङ्गर्भएतिव"त्यनेन मन्त्रेण साभिजनकुमारं वधूकाया उत्सङ्गे स्थापयति। अथ वा तूष्णीम्। ततस्तस्य कुमारस्योत्सङ्गस्थस्याऽञ्जलौ मङ्गल्यानि फलानि दत्वा ततो ब्राह्मणेभ्यः किञ्चिद्दत्वा "पुण्याहंभवन्तोब्रुवन्त्वि"ति ब्रूयात्। ततो ब्राह्मणाः "पुण्याह"मिति त्रिर्वदन्ति। इदं च कुमारोत्सङ्गदानं कर्म एके इति वचनात्पाक्षिकम्।ततः पाक्षिकःस्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। अपरे त्वेवं पठन्ति। आनड्डहमित्युक्तं तस्मिन्नुपवेश्यान्वारब्धायां महाव्याहृतिभिर्हुत्वा पतिश्चतस्रो जुहोति। तेषां महाव्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा ततो"प्रियमाज्यादेवे"त्यनेन चतस्र आज्याहुतयो होतव्या इति। तत "इहैवस्तमावियौष्ट"मिति षड्चं वरो जपेत्। सर्वे वा जपन्ति। इहैवस्तमित्यादिना वधूं वरं च जनीयात्रिका गृहं प्रवेशयन्ति। ततः प्रविश्य "दधिक्राव्णो अकारिष"मित्यनेन मन्त्रेण दम्पत्योपि दधि संप्राश्नतः।वरो मन्त्रं जपेत्। ततो वाग्यतौ तावदासीयातां यावदस्तमियन आदित्यः। ततोस्तमिते "ध्रुवैधी"

त्यादिना मन्त्रेण वरो वधूकाया ध्रुवं दर्शयति । ततो वधूः यदि पश्यति यदि न पश्यति उभयथापि "ध्रुवं पश्यामि, प्रजां विन्द" ति भणयितव्या । ततः पाणिग्रहणादारभ्य त्रिरात्रं मैथुनमकुर्वन्तौ भूमौ शयीयाताम् । "पितरश्चत्रिप्लुतं यावगच्छत"मिति तृचेन दम्पत्यपि दधि शुक्लं भुञ्जीयाताम् । वरो मन्त्रं जपेत् ॥

सायं प्रातर्वैवाह्यमग्निं परिचरेतामित्युक्तं तद्वक्ष्यामः । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः "अग्नये स्वाहा, अग्नये स्विष्टकृते स्वाहे" त्याज्यस्य हुत्वा ततो महाव्याहृतिभिः सर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति । अथ वधूः क्षिप्रं गर्भकामा भवति ततः अग्नयेस्वाहेत्यस्य स्थाने "पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्चाग्निः पुमान्संवर्त्ततां मयि स्वाहे" ति हुत्वा द्वितीया सौविष्टकृती । ततः पाणिग्रहणादारभ्य वर्षेण दशरात्रं वियोगः न कर्त्तव्यः ॥

पाणिग्रहणे व्यतीते त्रिरात्रं यथोक्तेन व्रतेन स्थित्वा चतुर्थीह्नि चतुर्थीकर्मेति तद्वक्ष्यामः । अत्रस्तरणाघाराज्यभागा निर्विकल्पाः । उपलेपनादि स्तरणान्तं कृत्वा ततः पूर्ववत्पवित्रच्छेदनादि प्रोक्षणान्तं कृत्वा तत "अग्नये वायवे सूर्यायार्यम्णे वरुणाय पूष्णे प्रजापतये" इति सप्तदेवताभ्यस्तण्डुलान् गृहीत्वा तत्प्रक्षेपोऽधिश्रयण श्रितस्याभिघारणं कृत्वा ततः समिदाधानादि आघाराज्यभागान्तं करोति । तत्रोऽस्मिन्कर्मणि महाव्याहृतिभिर्हुत्वा स्थालीपाकस्य जुहोति इति केचित्पठन्ति । पाक्षिकमहाव्याहृतिचतुष्टयमाज्यस्य हुत्वा ततः सकृदाज्यस्योपस्तीर्य ततो द्विर्हविषः त्रिः पंचार्षेयाणां ततः पुनराज्यस्य गृहीत्वा गृहीतशेषमभिघारयन्ति । एवं सर्वत्र । "अग्नेप्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि या-

स्यापातेरनो तनूस्तामस्या अपजहि स्वाहा, वायो प्रायश्चित्तिरसित्वं देवानां प्रायश्चित्तिरसि यास्या अपुत्रिया तनूस्तामस्या अपजहि स्वाहा,' सूर्यप्रायश्चित्तिरासि त्वं देवानां प्रायश्चित्तिरसि यास्या अपशव्या तनूस्तामस्या अपजहिस्वाहा, अर्यमणं नु देवं कन्या अग्निमयक्षत समांदेवो अर्यमा प्रेतो मुंचतु मापतेः स्वाहा, वरुणंनुदेवं कन्या अग्निमयक्षत समां देवोवरुणः प्रेतो मुंचतु मापतेः स्वाहा, पूषणं नु देवं कन्या अग्निमयक्षत समां देवः पूषा प्रेतो मुंचतु मापतेः स्वाहा, प्रजापतेन त्वदेतान्यन्य" इति ऋग्भिः स्वाहाकारान्तैः सप्त आहुतीः स्थालीपाकस्य हुत्वा ततः सकृदाज्यं गृहीत्वा सकृद्धविः ततो द्विरभिघार्य "अग्नयेस्विष्टकृतेस्वाहे"ति यथोत्साहं ददाति। ततो महाव्याहृतिसर्वप्रायश्चित्तादि कर्मशेषं समापनीयमिति। एते मण्डपे लौकिकाग्नौ। यदि निर्मथ्येके विवाह इत्ययं पक्षो नाश्रितः। यदि पुनररणिपक्ष आश्रितस्ततः अरणी निर्मथ्य तस्मिन्नेवाग्नौ होमाः कर्त्तव्याः। केषां चिज्जातारणिपक्षोप्यस्ति। ततो अरणिभ्यां निर्मथ्याग्निं तस्मिन्नेवाग्नौ सर्वाणि शरीरसंस्कारार्थानि कर्माणि कर्त्तव्यानि॥

गर्भाधानकर्म वक्ष्यामः। अत्र स्तरणाधाराज्यभागाः पाक्षिकाः। ऋतुस्नातायां चर्थ्यां शुभेहनि उपलेपनोल्लेखनाधाराज्यभागान्तं कृत्वा ततो महाव्याहृतिचतुष्टयं हुत्वा फलिनीमूलं पेषयित्वा नस्ययोग्यं कृत्वा तत "उदीर्ष्वातः, पतिवतीह्येषा" इत्याभ्यामृग्भ्यां स्वाहाकारान्ताभ्यां भर्तृपूर्वं दक्षिणे नासिकापुटे निषिंचति आ उद्रमापणात्। ततो महाव्याहृतिचतुष्टयं हुत्वा पाक्षिकीं स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। ततो रात्रौ यस्यां वेलायां मैथुनं कर्तुमिच्छेत् तदा "गंधर्वस्य विश्वावसोर्मुखमसी" त्यनेन मन्त्रेण वधूकायाः योनिदेशे लोमशं प्रदेशमभि-

स्पृश्य मैथुनमारभ्य ततः समाप्ते मैथुने कर्मणि रेतसेके तूष्णीं वधूमवघ्राय ततः "प्राणेरेतोदधामि कल्याणश्रीः" इत्यनेन मन्त्रेण वधूनामोपलक्षितेन यन्त्रारूढ एव निश्वासं तथा मुञ्चति यथा वधूकास्पर्शनं भवति। एष प्रथमपक्षः। "यथाभूमिरग्निगर्भा यथा द्यौरिन्द्रेणगर्भिणी वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते कल्याणश्रि"इत्यनेन वा मन्त्रेण निश्वासं मुञ्चति । एष द्वितीयः पक्षः। अथ वा "आते योनिं गर्भ एतु पुमान् वाण इवेषुधिं आधीरो अत्र जायतां पुत्रस्ते दशमास्यः, पुमांसं पुत्रं जनयन्तु पुमाननुजायतां तेषां माता भविष्यसि जातानाजनयासिच, पुंसि वै पुरुषोरेतस्तत्स्त्रियामनुषिञ्चतु, तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् प्रजापतिर्व्यदधात्सविता व्यकल्पयत स्त्रीष्वयमन्यास्वादधात्पुमांसमादधादिह यानि भद्राणि वीजानि पुरुषा जनयन्ति नः तेभिष्ट्वं पुत्रं जनय सुमसूर्देनुका भव, अभिक्रन्दं वीलयस्व गर्भमाधेहि साधय वृषाणं वृषं नाधेहि प्रजायै त्वा हवामहे, यस्य योनिं यतिरेतो गृभाय पुमान् पुत्रो धीयतां गर्भे अन्तः तं पिपृहि दशमास्यान्तरुदरे सजायतां श्रेष्ठ्यतमस्त्वाने"मिति वा। आतेयोनिमित्येवमादिर्मन्त्रगणः। अनेन वा अनुप्राणनं कुर्यात्। एष तृतीयः पक्षः। एतच्चोपस्थाभिमर्शनानुप्राणनान्तं मैथुने कुर्यादागर्भसंस्थानात्। अपरे व्याचक्षते। मैथुनान्ते श्लोकं कृत्वा अन्यतममनुप्राणनं कुर्यात्। अन्ये त्वाहुः पूर्वाभ्यां पक्षाभ्यामन्यतरेण पक्षेणानुप्राणनं कृत्वा ततः "आते योनिं गर्भएत्वि"त्येवमादिमन्त्रगणं जपेत्॥

एवं गर्भिणीभूतायां वधूकायां तृतीये मासि पुंसवनं भवति तद्वक्ष्यामः। एतच्च पुष्येण श्रवणेन वा कर्तव्यम्। अत्र स्तरणाघाराज्यभागाः पाक्षिकाः। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयमाज्यस्य हुत्वा ततः सोमस्य सूक्ष्मलता-

ऽथवा दर्भसूची न्यग्रोधस्य वा ऊर्द्ध्वमुच्छ्रिता शाखा तस्य यः सर्वेषां दृद्धोङ्कुरस्ते वा अथ वा अरूहोमो यावन्न क्रियते तावदेव यूपस्या गृहान्ते या आहवनीयस्याभिमुखा तां वा अथ वा समाप्ते यज्ञे जुह्वाः संस्रावं वा एतेषा सोमादीनामन्यतमस्य नस्ययोग्यं कृत्वा ततः "अग्निरायमश्नवत्तन्नस्तुरीयमधयोषापिनुसमिद्धाग्निवन् वसूनीर्णवाहिपशङ्करूपः स्तुसुभरोवयोधा" इत्येतैश्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैर्दक्षिणे नासापुटे प्रतिमन्त्रं चतुरो निषेकान् कृत्वा ततो महाव्याहृतिचतुष्टयं ततः पासिकः स्विष्टकृत्ततो महाव्याहृतिसर्वमापश्चित्तादितन्त्रशेषं समापनीयमिति ॥

गर्भरक्षणं वक्ष्यामः । गर्भसंभवादारभ्य चतुर्थे मासि भवति । अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । "रक्षोहाग्नये-जुष्टंगृभ्णामी"ति मनसा ग्रहणम् । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः"ब्रह्मणाग्निः संविदान" इति मत्यृचं षड्भिर्मन्त्रैः स्वाहाकारान्तैः षडाहुतीः स्थालीपाकस्यावदानधर्मेण हुत्वा ततः स्विष्टकृतं हुत्वा महाव्याहृतिसर्वमापश्चित्तादितन्त्रशेषं समापयेत्।तत आज्यस्थाल्यां यदाज्यं परिशिष्टं तद्धस्तेन गृहीत्वा "अक्षाभ्यां तेनासिकाभ्या"मितिपदर्चेन मत्यृचं यथालिङ्गमङ्गान्यत्र विमार्ष्टि ॥

सीमन्तोन्नयनं कर्म वक्ष्यामः । गर्भाधानमासात् सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनं भवति । सर्वोपकरणानि पुंल्लिङ्गानि भवन्ति । पुंल्लिङ्गे च नक्षत्रे कर्त्तव्यम् । अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो माङ्गल्यं स्नानं कारयित्वा अहते वाससी परिधाप्य पश्चादग्नेरुपवेश्याऽन्वारब्धाया महाव्याहृतिभिश्चतस्र आहुतीर्हुत्वा ततः स्थालीपाकस्य मुद्गमिश्रस्य वा "धाताद्धातु

दाशुषे मार्चां जीवातुमक्षितिं वयं देवस्य धीमहि सुमतिं सत्यधर्म-णः, धाता प्रजयाउत्तराय ईशे धातेदं विश्वं भुवनं जजान धाता पुत्रं यजमानाय दत्तां तस्माज्जुहव्यं घृतवज्जुहोते"तिसूत्रपठितं मन्त्रद्वयं " नेजमेषपरापते"ति तिस्र ऋचः "प्रजापतेनत्वदे-तान्यन्य" इति षष्ठी एतैः षड्भिर्मन्त्रैः स्वाहाकारान्तैः षडाहुतीः अवदानधर्मेण स्थालीपाकस्य हुत्वा ततस्त्रिश्वेतया शलल्या दर्भसू-च्या वा एताभ्यामन्यतरमुदुम्बरफलैरभिनवैः सह गृहीत्वा ललाटमध्यादारभ्य लोकप्रसिद्धं सीमन्तमुन्नयतीति । अपरे त्वेवं व्या-चक्षते । नाभेरन्तरमारभ्य सीमन्तमुन्नयन्ति । ततो "भूर्भुवः स्व" रित्यनेन मन्त्रेण तान्युदुम्बरफलानि गर्भिण्या उत्सङ्गे निदधाति । अपरे त्वेवं व्याचक्षते । "भूर्भुवः स्वः" इत्यनेन मन्त्रेण सीमन्त-मुन्नयति । तूष्णीं तान्युत्सङ्गे निदधाति । ततस्तानि फलानि त्रिवृतिसूत्रेण बद्ध्वा "अयमूर्जावतोवृक्षऊर्जीव फलिनीभवे"त्यनेन मन्त्रेण त्रिवृतिसूत्रग्रथितैरुदुम्बरफलैः कण्ठे बध्वा वीणागाथिनः "राजानं सङ्गायते"ति ब्रूयात् । अथ वा अन्यं कश्चित्पौरुषेण वि-ख्यातं वीरं सङ्गायतेति ब्रूयात् । तत उदकपूर्णे पात्रे व्रीहीन् य-वान् वा प्रक्षिप्य विष्णुर्योनिंकल्पयत्वि"त्येका ऋक् "राकाह-मुहवां सुष्टुतीहुव" इति षड्चः एतैः सप्तभिर्मन्त्रैः अक्षतमिश्रस्यो-दकस्य प्रतिमन्त्रं सप्तमहतीर्गर्भिणीं पाययेत् । तत आचान्तायाः "सुपर्णोसि गरुत्मांस्त्रिवृत्ते शिरोगायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनू"रित्यनेन मन्त्रेण गर्भिण्या उदरमभिमृशेत् । ततो नित्यं प्रहृष्टा या स्त्री तां मङ्गलगीतानि गापयेत् अथ वा बहुसु-वर्णालङ्कृता तां वा गापयेत् । एतत्कृत्वा प्रवहनसमर्थो बलीवर्दो दक्षिणा । ततः स्विष्टकृत्ततो महाव्याहृतिभिः सर्वप्रायश्चित्तादिकं कर्मशेषमशेषं समापनीयमिति । काकातनिका बृहत्कलञ्जनिका

लोहितैः शोभनैर्महद्भिः फलैर्विकचा अञ्जलौ मृद्यमाना पिच्छिला भवति । पाठाकिकेति च प्रसिद्धा । कोशातकी घोषाटकीति प्रसिद्धा । बृहती प्रसिद्धा । कालकीतकं कालाधककलिकेति प्रसिद्धा । एतेषां पञ्चानां मूलानि पेषयित्वा प्रविष्यत्सूतिकागृहमुपलेपयेत् । रक्षोपघातार्थं न तु शरीरसंस्कारार्थमदृष्टार्थं वाऽनित्यमेतत् ।

जातकर्म वक्ष्यामः । अत्र स्तरणाद्याघाराज्यभागाः पाक्षिकाः । कुमारे जाते अच्छिन्नायां नाभ्यामुपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयं हुत्वा बालं तूष्णीं त्रिरवघ्राय ततः "ऋचामाणिहि, यजुषामनिहि, साम्नोदनिहि" इत्येतैस्त्रिभिर्मन्त्रैः प्रतिमन्त्रं वहिर्दिशेच्च निश्वासं बालकस्योपरिष्टात्करोति । ततो घृतमधुनी एकीकृत्य दध्युदके च एकीकृत्य ततश्चत्वार्येकीकुर्यात् । अथ वा व्रीहियवौ वा संनिघृष्य अभ्यवहारयोग्यौ कृत्वा " प्रते-यच्छामिमधुमन्मखायवेदं मसूतंसवितामघोना आयुष्मान्गुपितोदेवताभिः शतंजीवशरदो लोकेस्मिन् देवदत्त" इत्यनेन मन्त्रेण त्रिः प्राशयेत् सुवर्णेन । प्रतिप्राशनं मन्त्रावृत्तिः । देवदत्त इत्येतस्य स्थाने कखचछटठतथ पफशषसः एतान्मुक्त्वा शेषाणां मध्ये एकम क्षरमादौ कुर्यात् । यरलव इत्येतेषां चतुर्णामक्षराणामेकं मध्ये कृत्वा ततः कृत्प्रत्ययान्तं कुर्यात् । मिश्रितताद्धितप्रत्ययान्तमपि न कुर्यात् । द्व्यक्षरं चतुरक्षरं वा अथ वा षडक्षरमेवंलक्षणेन नाम्ना आमन्त्रणं कुमारस्य कुर्यात् । तच्च नाम मातापितरावेव वर्जयेतामिति । अपरे तु व्याचक्षते । यत्पूर्वपुरुषाणां पितृपितामहप्रपितामहानां कृतं तदेव नाम कुर्यात् न स्वमनीषिकया । सांप्रतं माण्डूकेयवचनं वक्ष्यामः । गोः कृष्णप्रायस्य शुक्लकृष्णानि लोहितानि च रोमाण्यभ्यवहारयोग्यानि कृत्वा यथोक्ते चतुष्टये प्रक्षिप्य पूर्वोक्तेनैव मन्त्रेण चतुः प्राशयेत् । अथ वा "भूर्भुवस्त्वयि

दधामि देवदत्त स्वाहा, भुवोयजुर्वेदंत्वयि दधामि देवदत्त स्वाहा, स्वः सामवेदंत्वयि धदामि देवदत्त स्वाहा,भूर्भुवःस्ववाकोवाक्यमितिहासपुराणमोंसर्वान् त्वयि दधामिदेवदत्त स्वाहा " इत्येते चत्वारो मन्त्राः स्वाहाकारान्ताः पूर्वोक्तस्य मन्त्रस्य स्थाने वैकल्पिका भवन्ति। एतैश्चतुर्भिमन्त्रैः श्चतुः प्राशयेत् । देवदत्तस्थाने पूर्वोक्तलक्षणाभ्यामन्यतरन्नाम दध्यात् । अपरे त्वेवं वर्णयन्ति । यदेतद्भूऋग्वेदमिति माण्डूकेयमतमेतास्मिन्निर्विकल्पमेव भवति । "प्रतेयच्छामि"इत्यनेन मन्त्रेण सह विकल्पो नास्ति । ततः अन्यतरेण पक्षेण कुमारस्य प्राशनं कृत्वा ततः "वाक्वाक्" इत्येवं कुमारस्य दक्षिणे कर्णे पठित्वा "वाग्देवी मनसा संविदाना प्राणेन वत्सेन सहेन्द्रमोक्ताः जुषतां त्वा सौमनसायदेवीम हीमन्द्रा काणी वाणीचीः सलिलाः स्वयंभू' रित्यनेन मंत्रेण कुमारमनुमन्त्र्य ततः शाणसूत्रेण सुवर्णं ग्रथित्वा बालकस्य दक्षिणे हस्तेवध्नाति । तत एकादशेह्नि तत्सुवर्णं ब्राह्मणाय दद्यात् गृहे वा धारयेत् । ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

नामकरणं वक्ष्यामः । यस्मिन्नेवाग्नौ जातकर्महोमः कृतः तस्मिन्नेवेदमपि कर्तव्यम् । अत्र स्तरणाधाराज्यभागा निर्विकल्पाः । ग्रहणमोक्षणानि न कुर्यात् । मातापितरौ कुमारस्य शिरः स्नाप्य अहतवाससी भूत्वा उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो यस्यां तिथौ कुमारो जातस्तां तिथिं " प्रतिपदे द्वितीयायै तृतीयायै चतुर्थ्यै पञ्चम्यै षष्ठ्यै सप्तम्यै अष्टम्यै नवम्यै दशम्यै एकादश्यै द्वादश्यै त्रयोदश्यै चतुर्दश्यै पौर्णमास्यै अमावास्यायै" अनेन प्रकारेण जन्मतिथिं स्वाहाकारान्तं हुत्वा ततो जन्मनक्षत्रस्य यत्पूर्वं नक्षत्रं तस्य देवतं हुत्वा नक्षत्रं जुहोति ।

ततो जन्मनक्षत्रस्य दैवतं हुत्वा जन्मनक्षत्रं जुहोति । ततो जन्मनक्षत्रस्योपरिष्टाद् यन्नक्षत्रं तस्य दैवतं हुत्वा तं नक्षत्रं जुहोति । कथं जुहोतीति वक्ष्यामः । "अश्विभ्यां स्वाहा, अश्विनीभ्यां स्वाहा, यमाय स्वाहा, भरणीभ्यः स्वाहा, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, प्रजापतये स्वाहा, रोहिण्यै स्वाहा, सोमाय स्वाहा, मृगशिरसे स्वाहा, रुद्राय स्वाहा, आर्द्राभ्यः स्वाहा, अदित्यै स्वाहा, पुनर्वसुभ्यां स्वाहा, बृहस्पतये स्वाहा, पुष्याय स्वाहा, सर्पेभ्यः स्वाहा, अश्लेषाभ्यः स्वाहा, पितृभ्यः स्वाहा, मघाभ्यः स्वाहा, भगाय स्वाहा, फल्गुनीभ्यां स्वाहा, अर्यम्णे स्वाहा, फल्गुनीभ्यां स्वाहा, सवित्रे स्वाहा, हस्ताय स्वाहा, त्वष्ट्रे स्वाहा, चित्रायै स्वाहा, वायवे स्वाहा, स्वात्यै स्वाहा, इन्द्राग्निभ्यां स्वाहा, विशाखाभ्यां स्वाहा, मित्राय स्वाहा, अनुराधाय स्वाहा, इन्द्राय स्वाहा, ज्येष्ठाय स्वाहा, निर्ऋत्यै स्वाहा, मूलाय स्वाहा, अद्भ्यः स्वाहा, आषाढाभ्यः स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, आषाढाभ्यः स्वाहा, विष्णवे स्वाहा, श्रवणाय स्वाहा, वसुभ्यः स्वाहा, धनिष्ठाभ्यः स्वाहा, वरुणाय स्वाहा, शतभिषजे स्वाहा, अजायैकपदे स्वाहा, प्रोष्ठपदाभ्यः स्वाहा, अहिर्बुध्न्याय स्वाहा, प्रोष्ठपदाभ्यः स्वाहा, पूष्णे स्वाहा, रेवत्यै स्वाहा" एवं जन्मतिथिं नक्षत्रदेवतास्तिस्रः त्रीणि नक्षत्राणि एताः सप्त आहुतीर्हुत्वा, ततः "आयुर्द्यगीभिर-यमग्निर्वरेण्यः आयुर्नोदेहि जीवसे स्वाहा, आयुर्दाग्ने हविषा जुद्वा नो घृतप्रतीको घृतयोनिरेधि घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं स्वाहा अलंसोममहेभ्य"मिति ऋक् स्वाहाकारान्ता एवमेता दश आहुतीः स्थालीपाकस्यावदानधर्मेण हुत्वा, ततः अपोषवदाथेत्यादिनार्जितमात्मने यद्रोचते तन्नामधेयं प्रकाशं कृत्वा ब्राह्मणान् स्वस्तिवाच्य स्विष्टकृतं हुत्वा यथोत्साहं दद्यात् । ततो भ-

हाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

एवमेव मासि मासि जन्मतिथिं हुत्वोर्द्ध्वं संवत्सराद्धोग्नौ जुहोतीति नामकरणस्यैव कर्मशेष उक्तस्तं वक्ष्यामः । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा तत उक्तेन प्रकारेण कुमारस्य जन्मतिथिमाज्येन हुत्वा ततः पाक्षिकः स्विष्टकृत्ततो महाव्याहृत्यादितन्त्रशेषं समापनीयमिति । एतत्कर्म मासि जन्मतिथौ तस्मिन्नेवाग्नौ तावत्क्रियते यावत्संवत्सरं पूर्णम् । तत ऊर्ध्वं संवत्सरे आवसथ्याग्नौ तावत् क्रियते यावत् कुमारस्यात्मीयमावसथ्याधानं जायते । तत आत्मीयावसथ्याग्नौ यावज्जीवं कर्त्तव्यमिति ॥

अन्नप्राशनं वक्ष्यामः । कुमारस्य जन्मत आरभ्य षष्ठे मास्यन्नप्राशनं भवति । लौकिकेग्नौ गृहाभ्यन्तरमेव कुर्यात् । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः "अन्नपतेन्नस्य नो धेह्यनमीवस्य शुष्मिणः प्रप्रदातारं तारिष ऊर्ज नो धेहि द्विपदे चतुष्पदे स्वाहा, यद्विद्धितेपुरुषत्राप" इत्यृक् "महश्चिदग्नएनसो अभीक" इत्यृक् "इममग्न आयुषे वर्चसे तिग्ममोजो वरुणसोमराजन् मा ते वास्मा अदितिः शर्मयं सद्विश्वेदेवजरदृष्टिर्यथासत्स्वाहा" एतैश्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैश्चतस्र आहुतीर्हुत्वा ततः "अग्नआयूंषिपवस"इत्यनेन मन्त्रेण कुमारकमभिमन्त्र्य "स्योनापृथिविनोभव" इत्यनेन मन्त्रेण ऊर्ध्वाग्रेषु कुशेषु प्राङ्मुखमुपवेश्य दधिमधुघृतमिश्रमन्नं महाव्याहृतिभिश्चतसृभिः प्रतिमन्त्रं चतुः प्राशयेत् । अपरे त्वेवं वर्णयन्ति । महाव्याहृतिभिस्त्रिः प्राशयेदिति । एतत्तावन्नित्यं शरीरसंस्कारकम् । अथ कुमारस्य पिता कुमारकार्थ एव कामसंयुक्तो भवेत्ततोऽनेनैव प्रकारेण छागमांसमन्नाद्यकामः, तै-

त्तिरीयं ब्रह्मवर्चसकामः, मात्स्यं जवनकामः, घृतेनाक्तमोदनं तेजस्कामः, इत्येवमन्नप्राशने कृते पाक्षिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादिके कर्मशेषे कुमारस्य माता प्राश्नीयात् ॥

चूडाकरणं वक्ष्यामः । जन्मत आरभ्य कुमारस्य संवत्सरे पूर्णेऽथ वा तृतीये वर्षे चूडाकरणं भवति । एतच्च बहिः लौकिकेऽग्नौ मण्डपे कर्त्तव्यम् । अत्र के चित्पठन्ति । पञ्चमे क्षत्रियस्य सप्तमे वैश्यस्येति । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो व्रीहियवतिलमाषाणां चतुर्णां द्रव्याणां चत्वारि पृथक्पात्राणि यथाशक्त्या पूरयित्वा बलीवर्दचर्म गोमयं यवतिले समूलकुशसहिते लोष्टे स्थापितमादर्शं लोहक्षुरं च एतानि सर्वाणि अग्नेरुत्तरतः स्थापयित्वा महाव्याहृतिचतुष्टयं हुत्वा तत आनडुहे चर्मणि कुमारकमुपवेश्य " संसृज्यध्वमृतावरीरूर्मिणा मधुमत्तमाः पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये " इत्यनेन मन्त्रेण एकारान्तेन उष्णास्वप्सु शीता आसिञ्चति । ततः " आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे, त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्ते करोमि त्र्यायुषं देवदत्त " इत्यनेन मन्त्रेण कुमारनामोपलक्षितेन त्रिराहृतेन कुमारस्य शिरसि दक्षिणे पार्श्वे केशान् स्तोकान् शीतोष्णाभ्यामिश्रिताभिरद्भिः प्रक्षालयेत् । ततः त्रिः श्वेतया शलल्या विजटीकरणं पाक्षिकम् । ततस्तानेव केशांस्तूष्णीं नवनीतेनाभ्यज्य ततः "ओषधे त्रायस्वैन" मित्यनेन मन्त्रेण तेषामेव केशानां छेदनदेशे कुशतरुणमन्तर्धाय ततः केशान् कुशतरुणं चादर्शेन युगपत् स्पृष्ट्वा ततः " तेजोऽसि स्वधितिष्टे पिता मैनं हिंसी " रित्यनेन मन्त्रेण लोहक्षुरं गृह्णाति । अपरे त्वेवं व्याचक्षते । ताम्रमयं क्षुरं गृह्णाति । तच्च न युज्यते । ताम्रमयस्य

च्छेदनाऽसामर्थ्यात् अननुष्ठानत्वाच्च । ततः क्षुरं गृहीत्वा " येनावपत्सविता क्षुरेणाग्रे क्षुरेण राज्ञो वरुणस्य विद्वान् येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः तेन ब्रह्माणो वपतेदमद्यायुष्मान्दीर्घायुरयमस्तु वीरो देवदत्त " इत्यनेन मन्त्रेण सकुशतरुणान् केशांश्छित्वा सकुशलोष्टस्थे गोमये स्थापयेत् । एवं " माप उन्दन्तुजीवसे " इत्यारभ्य गोमये केशस्थापनान्तमेवं द्वितीयच्छेदनमेव तृतीयच्छेदनं कृत्वा गां ददात्यहतं वासश्च । ततोऽनेनैव प्रकारेण द्विरुत्तरतः स्थित्वा ततो नापितेन यथागोत्रस्थिति क्रियमाणं मुण्डनं कारयित्वा ततो महाव्याहृतिचतुष्टयं पाक्षिकस्विष्टकृद् ततो महाव्याहृतिसप्तरुण्याहृतिसर्वमायाश्चित्तादितन्त्रशेषं समापनीयम् । व्रीहियवतिलमाषपात्राणि नापिताय दद्यात् । बह्वोषधिसंपन्ने प्रदेशे उदकस्य वा समीपे कुमारकेशान् भूमौ निखनेत् । कन्यानां तूष्णीं कर्माणि कर्त्तव्यानि । षोडशवर्षेऽष्टादशे वा गोदानकर्म भवति । तत्र द्वौ च्छेदावधिकौ कर्त्तव्यौ । शेषं चूडाकरणकर्मसमानमिति ॥

इति अहिछत्राविषये कौशुंवरवास्तव्यवासुदेवकृते साङ्ख्यायनगृह्यसंग्रहे प्रथमोऽध्यायः समाप्तः ॥

उपनयनं वक्ष्यामः । गर्भाष्टमे वर्षे ब्राह्मणस्योपनायनं कुर्यात्, गर्भदशमे गर्भैकादशे क्षत्रियस्य, गर्भद्वादशे वैश्यस्य । सर्वेषामादिभूतानां कालानामतिक्रमकालो द्विगुणादूर्ध्वं नात उपनेतव्याः । न च तैःसहाऽध्ययनयाजनविवाहादि कुर्यात् । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयं हुत्वा ततो यथागोत्रस्थिति कृतमुण्डनक्रियं कृतस्नानं यथाविभवमलङ्कृतमहतवाससाऽऽच्छादितं कृष्णा-

जिनोत्तरीयं माणवकं कृत्वा पश्चादग्नेः प्रत्यङ्मुखं स्थितं कुर्यात् । ततः आचार्यः प्राङ्मुखः स्थितः " इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात् प्राणापानाभ्यां बलमाविशन्तीसखादेवी सुभगा मेखलेय" मित्यनेन मन्त्रेण मौञ्जमेखलया कटिप्रदेशं प्रदक्षिणया त्रिः परिवेष्टयति । त्रिभिरावेष्टनैस्त्रय गुणा भवन्ति । ग्रन्थीन् यथागोत्रं प्रवरसङ्ख्यया कुर्यात् । मेखलामन्त्रयज्ञोपवीतमन्त्रे माणवकेनाप्युच्चारयितव्ये मन्त्रलिङ्गात् । " मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशास्त्र द्रविणं समिद्धं अनाहनस्यं वसनं जरिष्णु परीदम्वाज्यजिनन्दधेहम्, यज्ञोपवीतमसि यज्ञस्यत्वोपवीतेनोपनह्यामी"त्यनेन मन्त्रेण त्रिवृतमूर्द्धीकृतं कार्पासमयं लोकप्रसिद्धं यज्ञोपवीतं गृहीत्वा माणवकस्य दक्षिणं बाहुं प्रवेशयित्वा शिरः प्रवेश्य वामे स्कन्धे स्थापयेत् । एवं यज्ञोपवीतीत्युच्यते विपरीते तु न । अप्राचीनावीतिनं कृत्वा ततो माणवकस्यात्मीयं चाञ्जलिमुदकेन पूरयित्वा " को नामासि" इत्याचार्यो माणवकं पृच्छति "स मानार्षेयोऽहं भो" इति माणवकः स्वं नाम कथयति । ततो "ब्रह्मचारी भवान्त्रूही" त्याचार्यः पृच्छति । " ब्रह्मचार्यहंभो" इति माणवकः कथयति । एवं पृष्टाख्यातश्च आचार्यो माणवकाञ्जली " भूर्भुवः स्व"रित्यनेन मन्त्रेणोदकाञ्जलीस्त्रीनासिच्य माणवकाञ्जलिं स्वहस्तसंपुटेन दक्षिणहस्तोत्तरेण गृहीत्वा "देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयामि देवदत्त" इति मन्त्रं माणवकनामोपलक्षितं जपेत् । अथ माणवकसमृद्धाधिपत्यमिच्छति ततो "गणानां त्वा गणपतिं हवामहे" इत्येतामृचं जपेत् । "आगन्तामारिषे"त्यनेन ऋचा क्षत्रियान् उपनयेत् । अथ माणवकस्त्रैवर्णिको व्याधितो भवति ततो महाव्याहृतीश्चतस्रो जपेत् । " ॐ भूः ॐ भुवः ॐ स्वः ॐ महर्भूर्भुवः स्वः, उपन-

याभिदेवदत्त" इत्यनेन मन्त्रेण । एवं त्रयाणामपि वर्णानां मन्त्रे माणवकनाम उच्चारयितव्यम् । अपरे त्वेवं व्याचक्षते "देवस्यत्वा सवितु"रित्यनेन सह समुच्चय इति । ततस्तथा गृहीताभ्यामेव हस्ताभ्यां "भगस्ते हस्तमग्रभीत्सविता हस्तमग्रभीत्पूषा ते हस्तमग्रभीदर्यमाहस्तमग्रभीन्मित्रस्त्वमसि धर्मणाग्निराचार्यस्तव देवदत्तोहं चोभावग्न एतं ते ब्रह्मचारिणं परिददामीन्द्रैतं ते ब्रह्मचारिणं परिददाम्यदित्यैतं ते ब्रह्मचारिणं परिददामि विश्वेदेवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां देवानामाधिपत्याय सुश्लोक्याय स्वस्तये" इतीमं मन्त्रं माणवकनामोपलक्षितं जपित्वा ततः "ऐन्द्रीमावृतमावर्त आदित्यस्यावृतमन्वावर्त्ते" इत्यनेन मन्त्रेण माणवकं प्रदक्षिणमावर्त्तयित्वा प्राङ्मुखं करोति । माणवकोऽपि मन्त्रमुच्चारयति । आचार्यो माणवकस्य दक्षिणकक्षान्तरे स्वं दक्षिणं हस्तं प्रवेशयित्वा "अरिष्यतस्ते हृदयस्य प्रियो भूयास" मित्यनेन मन्त्रेण दक्षिणप्रादेशेन हृदयदेशमभिमृश्योदकं स्पृष्ट्वा ततस्तूष्णीमप्रदक्षिणं पर्यावृत्यात्मनोऽभिमुखं कृत्वा माणवकस्य हृदये उर्द्धाङ्गुलिं पाणिं स्थापयित्वा "ममव्रते हृदयं ते दधामि ममचित्तमनुचित्तं ते अस्तु ममवाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमासिकस्यसाविव्रस्यब्रह्मचर्यस्य देवदत्त" इति मन्त्रं माणवकोपलक्षितं जपेत् । अथ वा त्रैरात्रिकस्यसावित्रस्यब्रह्मचर्यस्य, अथ वा द्वादशरात्रिकस्य सावित्रस्य ब्रह्मचर्यस्य, अथ वा सांवत्सरिकस्येति । उदकं स्पृष्ट्वा तत "ऐन्द्रीमावृतमावर्त्त" इत्यनेन मन्त्रेण पूर्वोक्तेन पुनः प्रदक्षिणमावर्त्तयित्वा प्राङ्मुखं कृत्वा दक्षिणेन प्रादेशेन माणवकस्य दक्षिणस्कन्धप्रदेशमन्वारभ्य "ब्रह्मचार्यसि, समिधमाधेहि, अपोशान,कर्मकुरु,मादिवास्वाप्सीः,वाचयच्छाऽऽसमिदाधानादि"

ति मन्त्रं जपित्वा तथा कथयति यथा माणवकस्य प्रतिपत्तिर्भवति । ततः " एधाते अग्ने समित्तया वर्द्धस्व चाचप्यायस्व वर्द्धिषीमहि च वयमाचप्यासिषीमहि स्वाहा" इत्यनेन मन्त्रेण माणवकस्तांसमिधेषाऽग्नौ समिधमादध्यादमन्त्रकञ्च ॥

सावित्रनुवचनं वक्ष्यामः । अस्मिन् कर्मणि त्रयः पक्षाः । संवत्सरसावित्रीमन्वाह, त्रिरात्र, मन्वक्षं वेति । तत्र तावच्छिष्टैरन्त्यपक्ष एवाङ्गीकृतः । स उच्यते । समिदाधानान्तमुपनयनकर्म कृत्वा तस्मिन्नेव तत्रोत्तरेणाग्निं प्राङ्मुख आचार्यः प्रत्यङ्मुखो माणवको द्वावप्युपविशतः । तत आचार्यः "माणवकमधीहि भो " इति चोदयति । तत आचार्य ॐकारं कृत्वा "सावित्रींभो अनुब्रूही"ति माणवकं वाचयति । ततः आचार्य ॐकारं कृत्वा "तत्सवितुर्वरेण्य " मित्येतामृचं पादं पादं पाठयित्वाऽर्द्धर्चमर्द्धर्चं पाठयेद् । ततः कृत्स्नामेव । मध्येऽवसानं न कर्त्तव्यम् । एतामेव वर्णत्रयस्यापि समनुब्रूयादिति स्मृत्यन्तरीयदर्शनम् । एवां पाठयित्वा "आपो नामस्थशिवा नाम स्थोर्जानामस्थाभया नाम स्थापूतानामस्थ तासां वोशीय सुमतौमाधत्त " इत्यनेन मन्त्रेण अकारांतेन स्मृत्यन्तरोक्तेन विधिना त्रिराचमयन्ति । मन्त्र आवर्त्तते । ततोऽग्नेः पश्चात्प्रत्यङ्मुखस्थितस्य माणवकस्य प्राङ्मुख आचार्यः स्थित एव " स्वस्तिनो मिमीतामश्विना भग " इति पञ्चर्चेन पालाशं वैल्वं वा दण्डं नासाग्रसंमितमर्पयति । तत आचार्याय माणवको गां ददाति । तत आचार्यो माणवकं प्रदक्षिणमग्निं पर्याणीय ततो महाव्याहृतिचतुष्टयं जुहुयाद् । ततः याज्ञिकः स्विष्टकृत्तो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । मार्जनं गायत्र्यैव, प्राणायामत्रयं, गायत्र्यैव, दशकृत्वो मार्जनमघमर्षणमपि त्रिः कृत्वो ऽञ्जलिप्रक्षेपः उपस्थानमष्टादश । अग्निका-

यँ मन्त्रस्थाने गायत्र्येव । माणवकोपि भिक्षाटनं करोति । "भव-तिभिक्षांदेहि" इत्यनेनाऽभिधानेन मातरमेव प्रथमं याचेत् । मा-तुरभावे या अरव्यं ददाति तां याचेत् । ततस्तावद्भ्रमति याव-द्दशनपरिमाणं पूर्णं तत्र आगत्य "इदं भैक्ष" मित्याचार्यस्य कथ-यित्वाऽभ्यनुज्ञातो भुञ्जीत । अग्निकार्यं भिक्षाचरणं भूमौ शयनं गु-रुशुश्रूषा एतानि ब्रह्मचारिणो नित्यं कर्त्तव्यानि । अन्यच्च क्षेत्रं हिरण्यं गामश्वं छत्रोपानहं ततो धान्यमन्नमथो शाकं गुरवे प्रीति-मान्माणवको ददाति । एतदपि शक्त्या कर्त्तव्यमिति । क्षत्रियस्य विशिष्टस्य माणवकस्योपनयने विशेषानाह । माञ्जिष्ठं क्षौमं वासः अहतं वा रौरवं चर्म उत्तरीयं धनुर्गुणो मेखला नैयग्रोधो ललाटसं-मितो दण्डः । "देवस्यत्वे" ति जपित्वा "आगन्त्रासमिरिपण्वे" ति जपेत् । सावित्र्यनुवचने त्रिष्टुभं क्षत्रियायेत्युक्तम् । ततः "आकृष्णेनरजसावर्त्तमान" इत्येतामृचमनुब्रूयात् । विद्यमाने ग्रामे ग्रामो दक्षिणा दातव्या । अविद्यमाने ग्रामे गौर्देया । "भि-क्षां भवति देही" ति भक्षयाचनाभिधानम् । शेषं समानमिति । वैश्यस्य वर्णविशिष्टस्य विशेषान् वक्ष्यामः । पीतं कौशेयं वासः अहतं वा गव्यं चर्मोत्तरीयं ऊर्णासूत्री मेखला औदुम्बरः केशसं-मितो दण्डः । सावित्र्यनुवचने जगतीं वैश्यायेत्युक्तम् । तथा "भी-इत्नामि" त्यृचमनुब्रूयात् । "भिक्षांदेहि भवती" ति भि-क्षाचरणाभिधानम् । अश्वो दक्षिणा अविद्यमाने गौः । शेषं समानम् । दण्डाश्च सर्वजातीयाः सर्वप्रमाणाश्च विकल्पेन सर्वेषां भवन्ति यदि त्रिरात्रपक्षं संवत्सरपक्षं सावित्र्यनुवचनेऽङ्गी-क्रियते । ततो लौकिकस्य संस्काररहितस्याग्नेरुत्तरतः कर्त्तव्यमिति ।

अनुपचनं वक्ष्यामः । अस्य च गृह्यसूत्रगतादेशोत्तरकालः स्थानं मया तु पृथक्कर्मत्वेन ग्रथितम् । संस्काररहितस्य लौकिकस्याग्नेरुत्त-

रतः आचार्यः प्राङ्मुख उपविशति प्रत्यङ्मुखो माणवकस्ततो माणवक आचार्यस्य पादोपसर्पणं कृत्वाभिवादयति । ततो हस्तौ प्रक्षाल्य दक्षिणोत्तराभ्यां कुशमुष्टिं मध्ये गृहीत्वा दक्षिणेन जानुना तान् कुशान् मूले आक्रमते । ततस्तानेव कुशान् सव्येनाचार्योऽग्रे संगृह्य ततो दक्षिणेन पाणिना आनडुहगोमयकुण्डात् गृहीताभिरद्भिः परिषिञ्चन् माणवकं वाचयति । "सावित्रीं भो अनुब्रूहि" एवं माणवकेनोक्ते "सावित्रीं ते अनुब्रवीमी"त्याचार्यो ब्रूते । सर्वेष्वेवं द्रष्टव्यम् । ततो "गायत्रीं भो अनुब्रूही"ति माणवकेनोक्ते "गायत्रीं ते अनुब्रवीमी" त्याचार्यो ब्रूते । "वैश्वामित्रीं भो अनुब्रूही" ति माणवकेनोक्ते "वैश्वामित्रीं तेनुब्रवीमी" त्याचार्यो ब्रूते । "ऋषीन् भो अनुब्रूही" ति माणवकेनोक्ते "ऋषींस्ते अनुब्रवीमी" त्याचार्यो ब्रूते। "देवता भो अनुब्रूही"ति माणवकेनोक्ते "देवतास्ते अनुब्रवीमी"त्याचार्यो ब्रूते । "छन्दांसि भो अनुब्रूही" ति माणवकेनोक्ते" छन्दांसिते अनुब्रवीमी"त्याचार्यो ब्रूते। "स्मृतिं भो अनुब्रूही" ति माणवकेनोक्ते "स्मृतिं ते अनुब्रवीमी" त्याचार्यो ब्रूते । " श्रद्धामेधे भो अनुब्रूही" ति माणवकेनोक्ते " श्रद्धामेधे अनुब्रवीमी"त्याचार्यो ब्रूते । पूर्वमुक्तं कृत्वा ततः आचार्यो "अग्निमीळेपुरोहितमित्येतस्य सूक्तस्य मधुच्छन्दा ऋषिरग्निर्देवता गायत्रं च्छन्द"एवं कथयित्वा ततो वाचयति । अनेन प्रकारेण सकलामेव संहितां पाठक्रमेण माणवकं वाचयेद् एष तावत्प्रथमः कल्पः । अथ वा यद्याचार्यः ऋषिदैवतच्छन्दांसि मन्त्रगतानि न जानाति तत"स्तत्सवितुर्वरेण्यमि"त्येतामृचं पादं पादं वाचयित्वाऽर्द्धर्चमर्द्धर्चं ततः सकलामेव । अर्द्धर्चान्तेऽवसानं न कुर्यात् । एवं वाचयित्वा स्वरूपतः कथयति । विश्वामित्रस्यार्षमित्येषा वैश्वामित्री सविता देवता इति । एषा गायत्री त्रिपदा चतुर्विंशत्यक्षरा भवति ।

पच्छः प्रयोगेऽष्टाभिरष्टाभिरक्षरैरवसानं कुर्यात् । अर्द्धर्चप्रयोगे द्वाभ्यां प्रथमद्वितीयाभ्यामेतत्पक्षान्तरमनुवाचनस्य अथ वा एकैकमृषिमनुवाकमनुवाकं वाऽनुब्रूयात् । दशमे मण्डलेनुवाकमेकमनुब्रूयात् । तृतीयमेतत्पक्षान्तरम् । अथ वा प्रतिदिनं श्लोकं यावन्मात्रं शक्नोति गुरुस्तावन्मात्रं ब्रूयात् । प्रतिदिनं यावत्संहिता समाप्ता इति चतुर्थमेतत्पक्षान्तरम् । अस्य च पक्षस्यादरेणानुष्ठानमिच्छन्ति व्याख्यातारः । अथ वा एकैकस्य ऋषेः प्रथममुत्तमं च सूक्तं प्रतिदिनं ब्रूयादासमाप्तेरिति । पञ्चममेतत्पक्षान्तरम् । अथ वाऽनुवाकस्य प्रथममुत्तमं च सूक्तमनुब्रूयादासमाप्तेः । षष्ठमेतत्पक्षान्तरम् । अथ वा सूक्तसूक्तस्यादिभूतामेकैकामृचं जपितव्यामाचार्यो माणवकस्य कथयत्येतत्सूक्तस्य एषा क्रमादिभूता एवं प्रकारमेतत्सूक्तम् । सप्तममेतत्पक्षान्तरम् । एतेषां सप्तानामपि पक्षाणामृषिदैवतच्छन्दांसीत्याचार्यप्रसादेन गार्हितोयं पक्षः इति व्याख्यातम् । श्रेषाणां यदाचार्यस्य रोचते तदनुब्रूयात् । अन्यतरस्मिन्पक्षे समाप्ते "अस्मिन्वै लोक उभये देवमनुष्या आसुरि"त्यारभ्य यावदाचार्येच्छा तावद्वाचयित्वा "एषाशुचि"रिति कथयति । ततो "मनुमेकाग्रमासीनमभिगम्य महर्षय"इत्याद्याः शक्तितो वाचयित्वा पवमानाः स्तनय इति कथयति । चोदितेभ्यास्तित्वयं कर्त्तव्यमेवा श्रद्धा ततो ग्रहणे शक्तिर्मेधा । ततो दक्षिणेन जानुनाऽऽक्रम्य मूले कुशतरुणानित्येवमादिना यथोक्तेन कुशतरुणान्गृहीत्वा आनुडुहेन गोमयेन मूले कुण्डमुदकाधारं कृत्वोदकमासिच्य तस्मादुदकं गृहीत्वाऽगृहीतेषु कुशेष्वासिञ्चति । ततस्तदहःशेषं ब्रह्मचारिणा सहोपविशेत् । न चाशनक्रियां कुर्यात् । अपरे त्वेवं व्याचक्षते । यथाचार्यस्यैव नियम इति । ततस्तस्मिन्नेवाह्न्यपराह्णे भवति । "अक्षतधाना भिक्षान्देही"त्येतेनाभिधानेन क-

णिष्टादिवर्जितां धाना भित्त्वा जुहोति । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो हस्तेन "सदसस्पतिमद्भुत"मिति प्रत्यृचं चतस्र आहुतीरक्षतधानानां जुहोति । ततो माणवकः स्वरविशदैरभ्यवहारैः सुगन्धिभिर्मिश्रैराचार्यं दसयित्वा "स्वस्तिभवन्तोब्रुवन्त्वि"ति ब्रूयात् । तत आचार्यः भिक्षां गृहीत्वा "ॐस्वस्ती"ति ब्रूयात् । ततः पाक्षिकः स्विष्टकृत्ततो महाव्याहृतिसर्वमायाश्चित्तादि तन्त्रशेषं समापनीयमिति ॥

सन्ध्योपासनकर्म वक्ष्यामः । अथाहरहः सायं प्रातश्च कर्त्तव्यम् । ग्रामस्य बाह्यतः प्रागुदीच्यां दिशि अर्द्धास्तमित आदित्ये प्राणायामं कृत्वा मन्त्रेणाचम्य तत "आपोहिष्ठामयोभुव" इति तृचेन प्रत्यृचं लोकप्रसिद्धं मार्जनं कृत्वा तत उत्तराभिमुखः कृतहस्तसंपुटः वाग्यतः सावित्रीं जपंस्तावदास्ते यावत्तारकाणां दर्शनज्ञानम् । ततो निष्क्रान्तायां सन्ध्यायां समहाव्याहृतिकां सावित्रीं प्रसिद्धां जपित्वा ततः " आनोभद्राः क्रतवोयन्तु " इति सूक्तं "कयानश्चित्रआभुवदि" तिसूक्तं "एतोन्विन्द्रंस्तवाम" "पृतनोवेदपिधन्तआप्य" मित्येवमादीनि लोकप्रसिद्धानि स्वस्त्ययनानि शक्तितो जपित्वा गृहमागच्छेत् । एवं प्रातस्तावदुदीचीं दिशं गत्वा दृश्यमानेष्वेव तारकेषु पूर्ववन्मार्जनं कृत्वा प्राङ्मुखस्तावज्जपति यावदादित्योदयः । तत उदित आदित्ये सायन्तनमिव जपं कुर्यादिति ॥

अग्निकार्यं वक्ष्यामः । अहरहः सायं प्रातश्च कर्तव्यम् । अग्निं प्रज्वाल्य परिसमूह्य परिसमुक्ष्य दक्षिणं जान्वाच्य " अग्नयेसमिधमहार्षं बृहते जातवेदसे स मे श्रद्धां च मेधां च जातवेदः प्रयच्छतु स्वाहा, एधोस्येधिषीमहि समिदसि तेजोसि तेजो मयि धेहि स्वाहा, समिद्धो मां समर्द्धय प्रजया च धनेन च स्वा-

हा, एषा ते अग्ने समित्तया वर्द्धस्व चाचप्यायस्व वर्द्धिषीमहि च वयमाचप्यासिषीमहि स्वाहा " इत्येतैश्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैश्चतस्रः समिध आधाय पर्युक्ष्य ततः " अग्निः श्रद्धाममेधांचाविनिपातं स्मृतिं च मे ज्वलितो जातवेदा अयं शुभं नः संप्रयच्छतु" इत्यनेन मन्त्रेणाग्नेरुपस्थानं कृत्वा ततः सौपर्णव्रतभाषितं दृष्टं वृद्धसंप्रदायानुमतिष्ठितं "त्र्यायुषजमदग्नेः कश्यपस्य त्र्यायुषंयद्देवानां त्र्यायुषन्तन्मे अस्तु त्र्यायुषम् " इत्येतैः पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे तत उत्तरे पृष्ठे एतेषु पञ्चदेशेषु भस्मना त्रिपुण्ड्राङ्कनं कृत्वा ततः " तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवीस्वस्तिरस्तुनः स्वस्ति मानुषेभ्यः, अर्द्धजिगातुभेषजं शंनो अस्तु द्विपदे शश्चतुष्पदे " इति जपित्वा वक्ष्यमाणेन विधिना गुरुमभिवादयेत् ॥

शुक्रीयव्रतकर्म वक्ष्यामः। उदयने यस्मिन्नेव काले इच्छत्याचार्यस्तस्मिन् ब्रह्मचारी भूत्वा चतुर्दशी पञ्चदशी प्रतिपदमष्टमीमेतास्तिथीर्मुक्त्वा शोभनदिवसे द्वावपि शिष्याचार्यौ अपराह्ने प्रागुदीचीं दिशं गत्वा उपलेपनोल्लेखनाद्याघाराज्यभागान्तं पूर्ववत्पाक्षिकं कृत्वा महाव्याहृतिचतुष्टयं हुत्वा ततः पश्चादग्नेः पूर्ववच्छिष्याचार्यौ स्थित्वा ततः आचार्यः "अग्नाविन्द्रआदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यम् " इत्यनेन मन्त्रेण माणवकं पृच्छति। ततः माणवकः "चरितं भो"कथयति। तत आचार्यो माणवकं प्राङ्मुखं कृत्वा अहतेन वाससा प्रदक्षिणं मुखं त्रिर्वेष्टयति यथानयनति उपरिष्टाद्दशौ कृत्वा तत्त्रिरात्रं समिदाधान भिक्षाचरणमधः शय्या गुरुशुश्रूषां चाऽकुर्वन्वाग्यतोऽप्रमत्तोरण्ये देवकुलेऽग्निहोत्रे वोपास्स्वेत्येवमनुशास्य तथा कथयति यथा माणवकस्य प्रतिपत्तिर्भवति । अथ वा एतान् नियमान-

होरात्रमुपदिश्य महाव्याहृतिचतुष्टयं हुत्वा ततः पाक्षिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति । अस्य च कर्मण उदीक्षणिका इति संज्ञा । ततस्त्रिरात्रेऽहोरात्रे वा निवृत्ते उपलेपनोल्लेखनादि कृत्वोर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति । इत्येवमुपनयनकर्म कृत्वा ततो "मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यं साम्वत्सरिकस्य शुक्रीयव्रतस्य ब्रह्मचर्यस्य देवदत्त" इति माणवकं बोधयित्वा तत "ऐन्द्रीमावृतमावर्ते" इत्यादि समिदाधानान्तं कृत्वा तत "आपोनामस्य" इति त्रिराचमय्य पूर्ववद्दण्डमर्पयति । ततो माणवक आचार्याय वरं ददाति । तत आचार्यो माणवकं पूर्ववत्प्रदक्षिणमग्निं पर्याणीय तं त्रिरात्रं समिदाधानं भिक्षाचरणमित्यादि यद्विधिनिबद्धं तस्यानुज्ञां दत्वा ततो महाव्याहृतिचतुष्टयं ततः पाक्षिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । ततः कस्मिंश्चिच्छोभने दिवसे पूर्वोक्तमनुवाचनं कुर्यात् । वेदञ्च साङ्गं पाठयेत् । सावित्रशुक्रीययोर्द्वादशरात्रं संवत्सरम् आचार्यच्छेत्यादि पक्षचतुष्टयं निर्दिष्टम् । शाक्वरव्रातिकौपनिषदानि तु साम्वत्सरिकानीति ॥

शाक्वरव्रतं वक्ष्यामः । उदीक्षणिकां कृत्वा तत त्रिरात्रेऽहोरात्रे वाऽतीते उपनयनकर्म पूर्ववत्कर्त्तव्यम् । "ममव्रतेहृदयन्त" इत्यस्य मन्त्रस्यान्ते "बृहस्पतिष्ट्वानियुनक्तु मह्यं साम्वत्सरिकस्य शाक्वरस्य ब्रह्मचर्यस्य देवदत्त" इति विशेषः । शेषं शुक्रीयवत्कर्त्तव्यम् । ततः संवत्सरे पूर्णे उदीक्षणिकां कृत्वाहोरात्रत्रिरात्रयोरन्यतरे निवृत्ते प्रभातवेलायां प्रागुदीचीं दिशं गच्छतः । आममांसं चण्डालं प्रसूतिकामृतुमतीं रुधिरच्छिन्नहस्तकं श्मशानं सर्वाणि श्वापदानि सर्वाणि

च धृतकरूपाणि एतेषामन्यतमं दृष्ट्वा निवर्तते । ततो प्राग्ज्योतिषं पुण्यदेशमुपागम्यानुदित आदित्ये “ भि”मित्यनेन मन्त्रेणोदकधारया प्रदक्षिण पूर्वद्वारं मण्डलं कृत्वा तेनैव मन्त्रेणोदकपात्रं मध्ये स्थापयित्वा तत्सूर्ष्णीं कुशान् दूर्वां च क्षिपति । ततः “ आगन्तगन्त”मित्यनेन मन्त्रेण शिष्याचार्यौ प्रविशतः । ततः प्राङ्मुख आचार्यः प्रत्यङ्मुखः शिष्यो द्वावप्युपविश्य तस्मिन्नुदपात्रे द्वावपि दक्षिणहस्तौ निक्षिप्य ततो व्याहृतीभ्यस्ततो गायत्रीं च पच्छोऽर्द्धर्चशो जपित्वा ततः “ अभित्वाशूरनोनुमो दुग्धा इव धेनवः ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्रतस्थुषः, ईशानमिन्द्रतस्थुषोत्वा अन्यो दिव्यो न पार्थिवो न जनिष्यते, नजातोनजनिष्यतेऽश्वायन्तो मघवन्निन्द्रवाजिनः गव्यन्तस्त्वा हवामहे,त्वामिद्धि हवामहे सातौ वाजस्य कारवः त्वां वृत्रेष्विन्द्रसत्पतिं नरस्त्वां काष्ठास्वर्वतः, त्वां काष्ठास्वर्वतः सत्वं नश्चित्रवज्रहस्तधृष्णुयामहस्तवानो अद्रिवः, महस्तवानो अद्रिवो गामश्वंरथ्यमिन्द्रसंकिरसत्रावाजं नजिग्युषे” इत्यनेन प्रकारेण पच्छ ऋचः षट् कुर्यात् । “कयानश्चित्र, इति ऋचो जपित्वा ततो “ दृशानम” इत्याद्यारण्यकपठितेन मन्त्रेणादित्यमीक्षते । ततो “पुरुहूतम्भत्स्यक्रिना” इति ऋक “ स्वस्तिनः पथ्यास्वधन्व” इति त्रिचः “अग्नयस्वेविषीयनेति” त्रिच “योगेयोगेतवस्तरम्” इति षट् “अस्या अस्या इदन्यम” इत्येका एता जपित्वा “एवाथामिनीरनुरे”ति जपेत् । ततो दक्षिणेन जानुनाक्रम्य भूमौ कुशतृणानिरयेवपाद्मिनानुवाचनपर्यन्त “विद्रामयरपि” स्तेनपायाः आरण्यकपठिता एव पुरीषपदमालिताः पाठयेत् । ततः “शरयस्मिपिपीयत” इति पूर्वोक्ता ऋचः पाठयेत् । तत ॐकारो महाव्याहृतयश्चतस्रः ततः सावित्री पूर्ववत् । ततो “अभित्वाशूरनोनुमः, त्वामिद्धि हवामहे, कयानश्चि

आयुव"दिति पूर्ववत् ततो द्वावपि "उदिवमुक्तियदध" इत्यारण्यपठितेन मन्त्रेणादित्यादिमीक्षतः। "तमहमात्मनिदध" इत्यनेनात्मानमीक्षतः। तत आभ्यामेव मन्त्राभ्यामादित्यमात्मानं च पुनर्निरीक्षतः। तत "उपयाश्री"रित्येवमादिकमारण्यकपठितं मन्त्रं जपतः। "सैन्द्र" इत्येवमादिना आरण्यकपठितेन मन्त्रेणोपविष्टतः। "इदमहमि"त्यादिना आरण्यकपठितेन उत्तरीये वस्त्रे धत्तः। उदकं स्पृष्ट्वा प्राङ्मुखौ स्थितौ "अपमाचइन्द्रविश्वं आमित्रानि" ति सम "इन्द्रक्षमृडयातिन" इति द्वे "यत्ते इन्द्रमयामह" इत्येका एता दशर्चो जपित्वा "शासइच्छामहे असौ" ति पुरस्तादारभ्य वृत्तेन प्रतिदिशमुपस्थानं कृत्वा ततः "सविता पश्चात्तात्सविता पुरस्ताद"इति ऋक् "तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चर"दिति ऋक् इत्याभ्यां सूर्योपस्थानं कृत्वोपविशतः। ततः तस्मिन्नेवोदपात्रे "यथाऽऽपः शान्ता"इत्यनेन मन्त्रेणारण्यकपठितेन हस्तौ क्षिपतः। ततो "यथा पृथिवी"त्यनेन मन्त्रेणारण्यकपठितेन भूमिं स्पृशतः। एव"मयमाग्ने"त्यनेन मन्त्रेणारण्यकपठितेनात्मानं स्पृशतः। एवमुदकभूम्यात्मनः पुनर्द्विः। तत उदपात्रस्थां दूर्वां गृहीत्वा"काण्डात्काण्डादित्यादिनारण्यकपठितेन मन्त्रेण स्वे स्वे शिरसि कुर्वतः। ततः "अग्निस्तृप्यतु, वायुस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु" इति षड्भ्यो देवताभ्यस्तस्मिन्नेवोदपात्रे तर्पणं कृत्वा ततः प्राचीनावीतिनौ भूत्वा"सुमन्तुजैमिनिवैशंपायनपैलाद्याचार्यास्तृप्यंति"त्येकाञ्जलिय एवं ततः पितृपितामहानां दत्वा ततः "पितृवंशास्तृप्यतु,मातृवंशास्तृप्यतु" इति द्वौद्वावञ्जली दत्वा ततः "समुद्रं वः प्रहिणोमी"त्यनेन मन्त्रेण तमुदपात्रं प्राप्रमुदकं वा निनयतः "कपानीश्रवआभुव"दिति तिस्रः"यथाकाये"त्यारण्यकपठित एको मन्त्र एभिश्चतुर्भिर्मन्त्रैरनुमन्त्र-

यते। तत उष्णीषं भोजनं दक्षिणां गां चाचार्याय माणवको द-
दाति। "निल्यन्ते ब्रह्मणस्पत"इत्याभ्यां मन्त्राभ्यां प्रणवेन वा म-
र्वमाचार्यः प्रतिगृह्णाति। अत्र एके वैश्वदेवं चरुं कुर्वते। अपरे तु
अग्नीन्द्रादित्यवैश्वदेवेभ्यश्चरुं कुर्वते ॥

शुक्रियव्रतस्य कर्म वक्ष्यामः। शाक्वरे समाप्ते गृहं गत्वा तत उप-
लेपनोल्लेखनाद्युपनयनकर्म करोति। अयं तु विशेषः। "ममव्रते
हृदयन्ते दधामी"त्यस्य मन्त्रस्यान्ते "बृहस्पतिष्ट्वानियुनक्तुमह्यं सां-
वत्सरिकस्य शुक्रियकस्य ब्रह्मचर्यस्य देवदत्त"इति। ततः शाक्वरवत्क-
र्तव्यम्। अयं तु विशेषः। अस्मिन्नवसरे माणवक आचार्येण म-
हानाम्न्यः पाठितः तस्मिन् "प्रजापतिर्वै संवत्सर"इति आरण्यकस्य
द्वावध्यायौ श्रावयितव्याविति ॥

औपनिषदिकस्य कर्म वक्ष्यामः। शुक्रिये समाप्ते गृहं ग-
त्वा सर्वं शाक्वरवत्कर्तव्यम्। अयं तु विशेषः। "ममव्रतेहृदय-
न्ते दधामी"त्यस्य मन्त्रस्यान्ते"बृहस्पतिष्ट्वानियुनक्तुमह्यं सांवत्सरि-
कस्यौपनिषदस्य ब्रह्मचर्यस्य देवदत्त"इति। ततः शेषं शाक्वरव-
त्समापयति। ततः संवत्सरे पूर्णे उदीक्षणिकां कृत्वा शाक्वरवत्स-
र्वं करोति। अयं तु विशेषः। अस्मिन्नवसरे माणवकेन महाना-
म्न्ये पठिते तस्मिन्नवसरे "चित्रोह वैगार्ग्यायनि" रित्यारभ्यारण्य-
कं तावच्छ्रावयेद्यावत्समाप्तम्। ततः शाक्वरवत्कृत्वा गृहं प्रविश्य
समावर्त्तनं कुर्यादिति ॥

दण्डनियमान्वक्ष्यामः। ब्रह्मचारिणा आत्मनो दण्डस्य चान्त-
रे गन्तुं कस्य चन न दातव्यम्। यदि दण्डो भज्येत
यस्त्वखादिरस्यसार"मित्यनेन मन्त्रेणान्यं गृहीत्वा
मीता"मिति पञ्च जपेत्। अथ यदि
रज्ज्येत "त्वांचिदश्मनंवाजिनामि"त्यनेन मन्त्रेण ग्रन्थ्य

क्षितोमिमीता"मिति पूर्ववज्जपेत् । अथ यदि मेखला असन्धेया भवति ततोऽन्यां कृत्वा तूष्णीं परिधाय "मेध्यामेध्यत्विनायद्धे देविगोप्त्रे सरस्वति मेखले स्कन्नमच्छिन्नं संतनुष्व व्रतं मम,त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः" । स्वपयद्धविश्वेषः मनानिश्रद्धतया अदाभ्यो भवानोदृतो अजरः सुवीरः,दधद्रत्नानि सुमृडीको अग्ने गोपाय नो जीवसे जातवेदः"इत्येतैस्त्रिभिर्मन्त्रैर्ब्रह्मचारी स्वयमेव मेखलामनुमन्त्रयते । ते च मेखलायज्ञोपवीते असन्धेये परित्यजनयोग्ये दण्डं बध्नाति यावच्छुक्रियादेरन्यतरस्य व्रतस्य समाप्तिः । ततो व्रतसमाप्तौ दण्डमेखलाजिनयज्ञोपवीतानि "नहितेक्षत्रं नसहोनमन्यु" मित्यनेन मन्त्रेणाप्सु जुहुयात् । अथ वा ॐङ्कारेण जुहुयात् ॥

वैश्वदेवं वक्ष्यामः । कृतावसथ्यस्यैतद्भवति । यत्किञ्चिद्गृहे पाकं सर्वप्रकारं सिद्धं तत्करटीकोद्रवमाषादहविष्यवर्जितमेकस्मिन्नेव पात्रे गृहीत्वाग्निं प्रज्वाल्य परिसमुह्य पर्युक्ष्य दक्षिणं जान्वाच्य समिधमाधाय पाणिना जुहुयात् । "अग्नये स्वाहा, सोमाय स्वाहा,इन्द्राग्निभ्यां स्वाहा, विष्णवे स्वाहा, भरद्वाजधन्वन्तरये स्वाहा,विश्वेभ्योदेवेभ्यः स्वाहा,प्रजापतये स्वाहा,अदितये स्वाहा, अनुमतये स्वाहा,अग्नयेस्विष्टकृते स्वाहेति"दशाहुतीर्हुत्वा समिधमाधाय पर्युक्ष्य हुतशेषमुदकेन मिश्रयित्वा गृहमध्यभूमौ बलिं हरेत् । "अग्नयेनमः,सोमायनमः,इन्द्राग्निभ्यां नमः" इत्यादिभ्य दशभ्य आहुतिदेवताभ्यो नमस्कारान्ताभ्यो दत्वा ततः "नमोब्रह्मणे, ब्राह्मणेभ्योनमः,वास्तोष्पते प्रतिजानीह्यस्मा"नित्यृचानमस्कारमन्त्रेण ।"अपरे "वास्तोष्पते"इति प्रत्यृचं जपति । तेषामृक्क्रमेण नमस्कारान्तेन त्रयो बलिदानाः । वास्तोष्पतयेनमः । ततो बलिहरणस्य पूर्वं पूर्वस्यां दिशि "नमइन्द्राय,पैन्द्रेभ्योनमः" ततो दक्षिणस्यां दिशि "नमोयमाय, याम्येभ्योनमः" ततः प्रतीच्यां दिशि "नमोवरु-

णाय, वारुणेभ्योनमः" तत उदीच्यां दिशि "नमःसोमाय,सौम्येभ्योनमः" तत ऊर्द्ध्वायां दिशि "नमोबृहस्पतये,बार्हस्पत्येभ्योनमः"॥ ततो "विश्वेभ्योदेवेभ्योनमः"। तत आदित्याकारेण गोमयेन कृते मण्डले "नमआदित्याय,आदित्येभ्योनमः"। ततो "नमोनक्षत्रेभ्यः,ऋतुभ्योनमः,मासेभ्योनमः, अर्द्धमासेभ्योनमः, अहोरात्रेभ्योनमः, संवत्सरेभ्योनमः,धात्रेनमः, विधात्रेनमः,पूष्णे पथिकृतेनमः,भूतेभ्योनमः"। धात्रेइत्यादयश्चत्वारो मन्त्राः। एतैर्द्वादशबलिहरणं कर्त्तव्यम्। प्रथमं दक्षिणस्यां तत उत्तरस्यां ततोपस्थापात उपरिष्ट दिशि। "विष्णवेनमः" इति मेथ्यां "वनस्पतयेनमः" इत्युलूखले "ओषधीभ्योनमः" इति यस्मिन्प्रदेशे व्रीह्यादिधान्यानि। ततः "पर्जन्यायनमः, अद्भ्योनमः" इति बलिहरणद्वयमुदकपूर्णे मणिके। "नमः श्रियै" इत्यनेन शय्यायां शिरसि "भद्रकाल्यैनमः" इति शय्यायामेव पादतो "नमः सर्वभूतपतये" इत्यनेन यस्मिन् देशे मूत्रपुरीषोत्सर्गः क्रियते। "नक्तंचरेभ्योनमः" इति अन्तरिक्षे। "अहश्चरेभ्योनमः" इति अन्तरिक्ष एव। "अविज्ञाताभ्योनमः" इत्यादिमण्डलस्योत्तरतः। "धनपतयेनमः" इत्युत्तरत एव। ततोपसव्यं कृत्वा "ये अग्निदग्धाये अनग्निदग्धा" इत्यृचं पठित्वान्ते "स्वधानमः" इत्युक्त्वादित्यमण्डलतो दक्षिणस्यां बलिहरणस्य शेषं क्षिपेत्। ततो वैश्वदेवान्ते ब्राह्मणमन्यतमस्य वेदस्याध्येतारं भोजयेत्। ततो "हन्त" इत्यनेन मन्त्रेण हन्तकारं कृत्वानन्तरं गर्भिणीः सुवासिनीर्बालाननिष्टदांश्च भोजयेत्। ततः "श्वभ्यःश्वपचेभ्य" इति तेभ्यः। पक्षिभ्यो भूमौ दद्यात्। ततः स्वयमद्यातो भुञ्जीतेति॥

अथाचार्य्याणामिन्द्रादयः शालापतयः कर्त्तव्याः तद्व्याख्यास्यामः। षडर्घ्या भवन्ति। उपनयनं कृत्वा कृत्स्नं सरहस्यं वेदमध्यापितो येन स आचार्यः प्रथमः, येन पाकोरात्रादिकं कर्म स ऋत्विक् द्वि-

तीयः,गुरुस्तृतीयः,राजा सार्वभौमिकश्चतुर्थः,ब्रह्मचारी समावर्त्तने कृते तस्मिन्नेवाहनि स स्नातकः पञ्चमः,जामाता दुहितरं परिणेतुमागतः प्रियः षष्ठः एतेषामन्यतमो यद्यागच्छेत्तस्मै गोः पशुर्वा कर्त्तव्यः। पशुकर्म चोपरिष्टाद्वक्ष्यामः। अभावे यत्किञ्चिदन्नेन सुखादेन मांसरसं तत्प्रतिनिधिं कुर्यात्। यदि पशुं करोति तदाचार्यायागताया ऽऽग्नेयः कर्त्तव्यः। ऋत्विजे बार्हस्पत्यः, श्वशुराय प्राजापत्यः,राज्ञ ऐन्द्रः,जामात्रे मैत्रः, स्नातकायैन्द्राग्नः। एतेषामाचार्यादीनां संवत्सरस्योपरिष्टादन्यतमस्यागतस्य शाखापशुः कर्त्तव्यः। सोमविवाहयोरपूर्णेऽपि संवत्सरे यद्यागच्छेत्ततः शाखापशुः कर्त्तव्यः। आचार्यः पिता सखा च एते अहरहर्गृहे आगता अतिथिवद् द्रष्टव्याः। अतिथेश्च य उपचारः स स्मृत्यन्तरे पठितस्तं वक्ष्यामः। ब्राह्मणायाभ्यागतायाप आनयति। वैश्वानरः प्रविशत्यतिथिर्गृहान्। तस्मादानयति। भोजयित्वा सीमान्तमनुव्रजेत्। अनुज्ञात्वेति तेषामाचार्यादीनामन्यतमस्यापि आगतस्य यत्किञ्चिद्गृहे सुखं दुःखं वा कथितव्यम्। कैश्चिदपि यदुपदिशन्ति तत्कर्त्तव्यम्। नैकग्रामीणमतिथिमित्याचारः पठितस्तत्र यथैव पद्धतिरिति। ब्रह्मचारी स्वप्रयोजनेनाचार्योपदेशेन वा यदि प्रवसति ततः प्राणापानयोरेव उपांशूक्त्वा "अहं वत्स्यामि भो" इत्युच्चैर्ब्रूयात्। एवं ब्रह्मचारिणा पृष्ट आचार्यः "प्राणापानौ उरुव्यचास्त्वयामपये देवायत्वागोप्त्रे परिददामि देवसवितरेषतेब्रह्मचारी तं ते परिददामि तं गोपाय स त्वामामृषत" इतीमं मन्त्रमकारान्तमुक्त्वा ततः "ॐस्वस्ती" त्युच्चैर्ब्रूयात्॥

इति अहिच्छत्राविषये कौमुंदरवास्तव्यवासुदेवकृते साङ्ख्यायनगृह्यसंग्रहे द्वितीयोऽध्यायः॥

समावर्त्तनकर्म वक्ष्यामः। अथ स्नानाय राज्यभागाः प्रा-

सिकाः । उपलेपनोल्लेखनाद्याधाराज्यभागान्तं कृत्वा महाव्याहृति-चतुष्टयं हुत्वा ततो लोहितचर्मण्यानडुहे ब्रह्मचारिणमुपवेश्य मुखं कक्षोपस्थाद्यारभ्य यावत्पादौ सर्वमेव मुण्डापयित्वा नखानि च्छेदयित्वा व्रीहियवाद्यानेकीकृत्य पेषयित्वा ब्रह्मचारिणमुद्वर्त्तयेच ततोऽपामार्गबीजांस्ततः श्रीपर्णी पेषयित्वोद्वर्तयेत् । लौकिकं स्नानं कारयित्वा तत "आपोहिष्ठामयोभुव" इति नवर्चेन सूक्ते-न प्रत्यृचं नव उदकुम्भान् ब्रह्मचारिणो मूर्द्धनि निषिच्य च यथाविभवमलङ्कृत्य "युवंवस्त्राणिपीवसावसाथे" इत्यनेन मन्त्रेण वस्त्रयुगं परिधापयेत् । वाससोर्भेदान्मन्त्रावृत्तिः । तत उष्णीषेण शिरो वेष्टयित्वा मणिकुण्डले परिधाप्य वैणवं दण्डं गृहीत्वोपानहौ परिधाय छत्रं गृहीत्वा ततो महाव्याहृतिचतुष्टयं ततः पाशिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य ततो "वनस्पतेवीड्वंगोहिभूयाः, आमद्ब्रावापदमसी" इत्याभ्यां मन्त्राभ्यां रथमारोहेत् । प्रथमं दक्षिणेन पादेन ततो वामेनेति रथमारुह्य तस्य गृहं प्रथमं गच्छेद्योऽस्य गवा पयसा वा मधुपर्कं करोति । अथ वा गां फलं वनं वृक्षं दृष्ट्वा निवर्तेत । "इन्द्र श्रेष्ठानिद्रविणानिधेहि, स्योनापृथिवीभव" इत्याभ्यां रथादवतीर्य ततो वस्त्रयुग-मुष्णीषं कुण्डले दण्डोपानहौ छत्रमेतत्सर्वमाचार्याय दद्यात् । त-तस्तद्दहरव्यापारेण स्थातव्यं यद्वोचने नक्षत्रदर्शने ॥

गृहकर्म वक्ष्यामः । यस्मिन्प्रदेशे गृहं कर्त्तव्यं तां भूमिं "धृ-वां नाऽपायविशः परिगृह्णामी" त्यनेन मन्त्रेणोदुम्बरशाखया त्रिः परिलिख्य शोधयित्वा मध्ये जुहोति । अत्र स्तरणाद्याज्यभागाः पाशिकाः । उपलेपनोल्लेखनाद्याधाराज्यभागान्तं कृत्वा ततः "कौशिकस्याक्षिकायनेग्रामकामोनदेवानोकृष्मनातिरिक्ताद" इति द्वे आ-ज्याहुती हुत्वा पाशिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादि

तन्त्रशेषं समाप्य ततो गृहं सूत्रयित्वा पूर्वस्यां दिशि द्वारं कल्पयित्वा द्वौ गर्तौ खानयेत्ततो दक्षिणस्यां दिशो द्वारप्रदेशे एवमेव पश्चिमायामेवमुत्तरस्यां ततो मध्ये एवं नव गर्त्तान् खानयित्वा ततस्तेषु गर्तेषु उदकं सर्पिः प्रक्षिप्य तत "इमं विमिमे अमृतस्य शाखांपयोधारामतरणींवसूनाम् एनांशिशुः क्रन्दत्याकुमार एनांधनुः क्रन्द" नित्यनेन मन्त्रेणोदुम्बरशाखां घृताक्तां पूर्वस्यां दिशि दक्षिणे गर्ते निखानयति । "इमामुच्छ्यामिभुवनस्यशाखां-मधोर्धारां प्रतरणींवसूनाम् एनांशिशुः क्रन्दत्याकुमारएनान्धेनुः क्रन्दतुपावकस्ये" त्यनेन मन्त्रेणाकारान्तेन पूर्वस्यां दिशि उत्तरे गर्ते तृतीयामुदुम्बरशाखां घृताक्तां निखनति । एवमेताभ्यामेव मन्त्राभ्यां चतुर्ष्वपि दिक्षु उदुम्बरशाखा घृताक्ताः पूर्वकृतेष्वेव गर्तेष्वष्टौ निखाय तत "इमामहमस्यवृक्षस्यशाखांघृतमुक्षतीमृततेमिनोमि एनांशिशुः क्रन्दत्याकुमारआस्यन्दतान्धेनवोनित्यवत्सा" इत्यनेन मन्त्रेण स्थूणाराजसंज्ञका महती स्थूणा भारक्षमा नवमे गर्ते निखाय तत "एवं कुमारस्तरुणेआवत्सोभुवनस्परि एवं परिस्रुतः कुम्भ्या आदध्नः कलशैरगमन् इहैवस्थूणेप्रतितिष्ठध्रुवाश्वावती गवतीशीलमावतीसेमेतिष्ठघृतमुक्षमाणेहैवतिष्ठनिमित्तानि, तिल्वलास्थाजिरावतीमध्येपोषस्यतृंपताम् मात्वाप्रापनघायवः, उपहूताइहगाव उपहूता अजावयः अथो अन्नस्यकीलाल उपहूतोगृहेषु नः, स्थन्तरेप्रतितिष्ठवामदेव्येश्रयस्वबृहस्पतिस्तभाये" त्यनेन मन्त्रेण पूर्वद्वारे दक्षिणा द्वारशाखामभिमृशेत । ततो "यज्ञश्चे"त्यनेन मन्त्रेण दक्षिणे द्वारे पश्चिमां द्वारशाखामभिमृशेत् । "दाक्षिचे" ति पूर्वाम् ततो "बलाचे"त्यनेन मन्त्रेण दक्षिणां स्थूणामभिमृशेत् । "ऊर्जश्चे" त्यपराम् । ततो "प्रजे"त्यनेन मन्त्रेणोत्तरद्वारे पश्चिमं स्थूणाराजमभिमृशेत् । "क्षत्रं चेति" ति पूर्वाम् । अपरे त्वेवं व्या-

वासते । "सत्यश्च श्रद्धाश्चे"त्येको मन्त्रः एतावता मन्त्रेण पुनराष्टत्तेन पूर्वद्वारे यथोक्तेन क्रमेण स्थूणाद्वयमित्यभिमृशेत् । एवं सर्वासु दिक्षु मन्त्रद्वयं समभ्यस्य स्थूणानामभिमर्शनं कर्तव्यं मन्त्राश्चाकारान्ताः कर्तव्याः । एवमन्यन्तरेऽभिमर्शने निवृत्ते "श्रीस्तुप" इत्यनेन मन्त्रेण गृहमध्य एव स्थूणाकारं क्षिपते समभिमृशेत् । "अहोरात्रे" इत्यनेन मन्त्रेण पुनराष्टत्तेन द्वारदेशे अभिमृशेत् । "संवत्सर" इत्यनेन मन्त्रेण द्वारे पिधानमभिमृशेत् । "उरुः समुद्रोअरुषः सुपर्ण" इत्यनेन मन्त्रेण घृताभ्यक्तं पाषाणं स्तुपस्याधस्तान्निखनति ॥

गृहप्रवेशकर्म वक्ष्यामः । अत्र स्मरणाघाराज्यभागाः पाक्षिकाः । आवसथ्याग्नौ उपलेनोल्लिखनाभ्युक्षणानि कृत्वा "अग्निप्रणयामि मनसा शिवेनायमस्तु सङ्गमनो वसूना माहिनीश्यविरं माकुमारं शंनोभवद्विपदेशश्चतुष्पदे" इति मन्त्रेण एकारान्तेनाग्निं नवगृहे द्वारे वाग्यतः प्रणीय समूहनं कृत्वोत्तरतोऽग्नेः प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य "आपोहिष्ठामयोभुव" इत्येताभिस्तिसृभिरद्भिः पूरयित्वा "अरिष्टास्माकंवीरा मापरामेविनोथेन" मित्यनेन मन्त्रेण तमुदकुम्भमभिमन्त्र्य पाक्षिकमाघाराज्यभागान्तं कृत्वा ततः "आंमत्वा शुरनोनुम" इति ऋचं पूर्वोत्तरः कृत्वा स्वाहाकारान्ताभिस्तिस्र आहुतीः पूर्वाह्णे हुत्वा ततः पाक्षिकीस्विष्टकृतनो महाव्याहृतिसर्वप्रायश्चित्तादि तन्त्रशेषं समाप्य ततो मध्याह्ने तस्मिन्नेवाग्नौ समूहनाद्यारभ्य पाक्षिकमाघाराज्यभागान्तं कृत्वा ततः "कयानश्चित्रआभुव" दित्यृचेन भत्यृचं स्वाहाकारान्ताभिस्तिस्र आज्याहुतीर्हुत्वा ततः पाक्षिकीस्विष्टकृतनो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य ततोऽपराह्णे तस्मिन्नेवाग्नौ कर्म भवति । तद्वक्ष्यामः । अथ

स्त्वणायाराज्यमागा निर्विकल्पाः । वास्तोष्पतये ग्रहणमोक्षणे । स्थालीपाकं श्रपयित्वा महाव्याहृतिभिश्चतस्रो "वास्तोष्पतेप्रति-जानीह्यस्मान्" [illegible] तिस्र "अमीवहावास्तोष्पते" इति एका "वा-स्तोष्पतेध्रुवास्थूणा" मित्येका एवमेकशालायां नव आहुतीर्हुत्वा ततः स्विष्टकृत्ततो हावकाय किंचिद्दत्वा तत "इंद्रस्यगृहाः शिवा वसुमंतो वरूथिनस्तानहं प्रपद्ये सहजायया सहप्रजया सहपशुभिः सहरायस्पोषेण सहजं मे किंचास्येतेने"त्यनेन मन्त्रेण ज्येष्ठपुत्रेण भार्यया सह पूर्वोक्तमुदकुंभं गृहीत्वा नवं गृहं प्रविशेत् । ततो महाव्याहृतिमर्वमायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

. यदि केन चित्प्रयोजनेन ग्रामान्निष्क्रमणं करोति ततः "ग्रा-मंशर्मंशिवशिवक्षेमाय वः शांत्यै प्रपद्ये भयेनो अस्तुग्रामोमार-ण्याय परिददातु निश्वमहाय मापरिदेहि" त्येवं मन्त्र जपन्निष्क्र-मेत् । ततः कृतप्रयोजनः पुष्पादिकं किंचिद्गृहीत्वा "अरण्यं-माग्रामायपरिददातुमहांतव्यमहायमापरिदेहि" ती मन्त्रं जपन् ग्रामं प्रविशेत् । ततो " गृहान् भद्रान् सुमनसः प्रपद्ये वीरघ्नोवीरवत-स्सुवीरान् इरावहन्तो घृतमुक्षमाणा अन्येष्वहंसुमनाः संविशेय " मितीमं मन्त्रं गृहं प्रविश्य सदा जपेत् ॥

. ~ प्रवसथजनं वक्ष्यामः । प्रवसने "इमांमिमित्रावरुणौ गृहान्गो-पायतं युवं अविनष्टानविह्नुतान्पापेनानभिरक्षत्वस्माकं पुनराग-मा"दित्यनेन मन्त्रेण कुटुम्बं समीक्षते । ततः "अपिपग्रामगन्महि" ति च जपित्वा प्रविशेत् । ततस्तावदग्नौ गच्छेत् यावदावस-थ्याग्निरुद्योतयति । प्रत्यागच्छन् स्वसीमादेशना वाग्यतो भूत्वा गृहस्थान् सर्वान् समीक्ष्य "गृहामाविभीतमावेपध्वमूर्जं बिभ्रतएम-सि ऊर्जंबिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः येषा-मध्येति प्रवसन्येषुसौमनसोबहु,गृहानुपह्वयामहेतेनोजानन्तुजानतः"

इति कुटुम्बं समीक्ष्य ततः "अयं नो अग्निर्भगवानयं नोभगवत्स्वरः तस्योपमद्ये भारिपामायं श्रेष्ठे दधातुन" इत्यनेन मन्त्रेणाग्न्यसध्यग्नेरुपस्थानं करोति। ततस्तास्मिन्दिने वैरिणमप्यागतं प्रियप्रश्नेनाभाषेत्ततो "विराजोदोहोसिविराजोदोहमशीय मयिपाद्यायैविराजोदोह" इत्यनेन मन्त्रेण स्वयं सेचनोदकं गृह्णाति। यथाहिताग्निस्ततो याजमानं कृत्वा उत्तरयावसथ्याग्नेरुपस्थानं करोति॥

आग्रयणं वक्ष्यामः। अत्र स्तरणाद्याराज्यभागा निर्विकल्पाः। इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां प्रक्षणमोक्षणे। उपलेपनोल्लेखनाद्याज्यभागान्तं कृत्वा ततः "इन्द्राग्निभ्यां स्वाहा, विश्वेभ्योदेवेभ्यः स्वाहा, द्यावापृथिवीभ्यां स्वाहा, अग्नये स्विष्टकृते स्वाहेति" स्थालीपाकस्य हुत्वा ततः "प्रजापतयेत्वाग्रहामि महांश्रिये मयं यशसे मह्यमन्नाद्याये" त्यनेन मन्त्रेण हुतशेषं स्तोकमभिमन्त्र्य तूष्णीमभ्युक्ष्याभ्युक्ष्य "भद्रान: श्रेयः समनैष्टदेवास्त्वयावशेन समशीमहित्वामनोमयोभूः पितर आविवेश शंनोभवद्विपदे शञ्चतुष्पदे" इत्यनेन मन्त्रेण त्रिः प्राश्नाति। प्रतिप्राशनमाचमनं मन्त्रावृत्तिश्च। एवं प्राश्य ततः "अमोसि प्राणतदृतं प्रवीम्यमोसिसर्वाडसि प्रविष्टः समे जरां रोगमपनुद्यशरीरादमामएधिमामृधाम इन्द्रे" त्यनेन मन्त्रेण स्वरान्तेन हृदयदेशमभिमृश्योदकं स्पृष्ट्वा ततो "नाभिरसिमाबिभीथाः प्राणानां ग्रन्थिरसि माविस्रस" इत्यनेन मन्त्रेण नाभिमभिमृश्य ततो "भद्रंकर्णेभिः शृणुयामदेवा" इत्यनेन मन्त्रेण लिङ्गोक्तानि शरीराणि स्पृष्ट्वा "तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत" इत्यनेन मन्त्रेणादित्योपस्थानं कृत्वा ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति॥

गोसवधकर्म वक्ष्यामः। परिवः सेन्याद्वधाद्याद्जतुधाधिष्ण्यः समानस्तगोपेर्वावोऽश्मोनवोरिषत्, पूषायाअन्नतुनः" इतिमन्त्रद्वये-

ये परिक्रान्ता अनुमन्त्रयेत् । अपरे तु व्याचक्षते । पथः परिवृत्ता अनुमन्त्रयेत् । "मासामूर्ध्वऋतावेतं मध्येपूर्णं घृतस्य च तानः सन्तु पयस्वतीर्बह्वीर्गोघृताच्च" इति "गावोअस्मानुतभरमकान्नि" इति च प्रत्यागतासु गोषु जपेत्ततः "उपेदमुपसर्पन" मित्यनेन मन्त्रेण गोष्ठं प्रवेशयेत् । "मयोभूर्वातोअभिवातूस्रा" इति चतसृभिर्गोष्ठगता अनुमन्त्रयते ॥

गवामङ्कनकर्म वक्ष्यामः । फल्गुनीपौर्णमासीमतीत्यामावास्यायेवेते रेवत्यामङ्क विकर्णं आत्मीयं कुर्यात् । "भुवनमसिसहस्रपोषमिन्द्रायत्वा अश्वोदद्व अक्षतमस्यरिष्टमिलानगोपायने यावतीमामिद् करिष्यामूयसीनमुत्तमा समाक्रियास" मिति स्वयं गोपतिः ऋत्विजो वा मन्त्रं जपति । अङ्कनकर्म त्वन्यः कुरुते । अङ्कवृत्ते मन्त्रावृत्तिः ।

पीयूषहोमकर्म वक्ष्यामः । अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । अग्नये ग्रहणप्रोक्षणे । आवसथ्याग्नावुपलेपनोल्लेखनाघाराज्यभागान्तं कृत्वा ततः "संवत्सरीणपयउस्रियाया" इतिद्वाभ्यामृग्भ्यां द्वे आहुती स्थालीपाककर्मणा हुत्वा ततः स्विष्टकृतो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयम् । अपरे व्याचक्षते । आहुतिद्वयमेव होतव्यं न प्रतिश्रुतकर्मेति ॥

गोषु यमजनने कर्म वक्ष्यामः । अत्र स्तरणाघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयमाज्यस्य हुत्वा पार्षिकः स्विष्टकृतो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य यमलं दद्यात् ॥

अथ वृषोत्सर्गकर्म वक्ष्यामः । यस्य गर्भग्रहणयोग्यो वत्सतर्यो द्वादश वर्त्तन्ते स्वकीयेन च क्षीरेण त्रयाणां ब्राह्मणानां पायसेन तृप्तिरुत्पद्यते स वृषोत्सर्गं कुर्यात् । कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाश्विने मासि । अत्र स्तरणाघाराज्यभागा निर्विक-

स्याः। पूष्णे ग्रहणमोक्षणे। आवसथ्याग्नौ अर्वा मध्ये उपलेप-
नोद्धरणाभ्युक्षणाग्निप्रणयनप्रभृति आघाराज्यभागान्तं कृत्वा
"इहरतिरिहरमध्वंस्वाहा, इहधृतिरिहस्वधृतिः स्वाहा, उपसृजन्वत्स-
पंमात्रेधरुणोमातरंधयन्, रायस्पोषमस्मासुदीधरत्स्वाहे" ति षळ
आज्याहुतीर्जुहोति। अन्ये त्वाहुरिहरतिरितिषड् जुहोतीति। ततः
"पूषा गाअन्वेतु" इत्यनेन मन्त्रेण पिष्टमयस्य स्थालीपाकस्य जुहो-
ति। "कद्रुद्रायप्रचेतस" इति नव ऋचः "इमारुद्रायतवसेकप-
र्दिने" इतिएकादश "आतेपितर्मरुतां सुम्नमेत्वि" तिपञ्चदश
ऋचः "इमारुद्रायस्थिरधन्वने" इतिचतस्र ऋचः "त्र्यम्बकंयजाम-
हे" इत्येका एताश्चत्वारिंशदृचो जपेत्। अपरे रुद्रं जपित्वेत्य-
पि पठन्ति। तेषां "नमस्तेरुद्रमन्यव" इति यजुर्वेदप्रसिद्धो म-
न्त्रगणस्तं जपित्वेति। ततोऽन्यतरजपे निवृत्ते एकवर्णं द्विवर्णं
त्रिवर्णं लोहितं वा स्मृत्यन्तरपठितं नीलं वा सर्वयूथस्य श्रेष्ठं सर्वा-
ङ्गैरुपेतं यूथमध्यस्थं यं वा गच्छन्तं यूथमच्छादयति यूथोऽनुगच्छ-
ति एतेषां यथालाभमन्यतमं सम्पूर्णाङ्गं बलवन्तं युवानमोजस्विनम-
पलक्षणवर्जितं कल्याणप्रजननं घण्टाचामरकादिभिर्यथाविभवम-
लङ्कृत्य "एतं युवानं पतिं वो ददामितेन क्रीडन्तीश्चरथ प्रियेण
मावनः साप्तजनुषाऽसुभगा रायस्पोषेण समिषामदेमस्वाहे"
त्यनेन मन्त्रेण वत्सतरीणां मध्ये वृषभमुत्सृजति। ततो वत्सतरी-
णां यूथस्य च मध्ये स्थितमनुमन्त्रयते "मयोभूर्वातोअभिवातू-
स्रा", इत्यनुवाकशेषेण "यथावः सुसहासति" इत्येवमन्तेन।
अपरे त्वेवं पठन्ति "मयोभूर्वात" इतिसूक्तेनैतेषां चतसृभि
ऋग्भिरनुमन्त्रणं भवति। अन्यतरेऽनुमन्त्रणे निवृत्ते त्रिवृत्कृतं
हुत्वा ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य सर्वासां
क्षीरेण पायसं श्रपयित्वा ब्राह्मणान् तर्पयेत्। कर्माङ्गभूतं पायसे-

मे ब्राह्मणभोजनम् । यत्पशोः कर्मापवर्गे ब्राह्मणभोजनं तत्कर्त्तव्य-मेवेति ॥

''अष्टकाकर्म वक्ष्यामः। ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः। अपरपक्षे तु प्रथमायां प्रथमायां शाकं जुहोति। अत्र स्तरणाघाराज्यभागाः निर्विकल्पकाः। उपत्रे ग्रहणप्रोक्षणे। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा तत "इयमेवसायाप्रथमाव्युच्छदन्तरस्यामरतिप्राविष्टा वधूर्जजान नवक्ष जनित्री त्रय एनां महिमानः सचंता स्वाहे"त्यनेन मन्त्रेण यथोक्तं स्त्रचौ चतुर्गृहीतं कृत्वा " इयमेवेव " इति एकाहुतिः ततः स्विष्टकृत "अस्यां वैवस्वत" इति शाकं स्थालीपाकधर्मेण हुत्वा "यस्या वैवस्वतोयमः सर्वेदेवाः समाहिताः अष्टका सर्वतोमुखी तामिकामानतीनृषद आहुस्ते प्राचाणोदन्तान्वः पवमानः मासाश्चार्द्धमासाश्च मनस्ये सुमनासुव स्वाहे" त्यनेन मन्त्रेण स्विष्टकृतं हुत्वा ततो महाव्याहृतिसर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति। मध्यमाया माघ्यत्र्यं च समानमेव कर्म तद्वक्ष्यामः । येषामाषाढीं पौर्णमासीमतीत्यानन्तरं वर्षाकालः प्रवर्तते तेषां श्रावणीं पौर्णमासीमतीत्याष्टका भवन्ति, येषां पुराषाढ्या अनन्तरामावास्यामतीत्य वर्षाकालः प्रवर्त्तते तेषां प्रौष्ठपद्यां पौर्णमासीमतीत्याष्टकाकर्म भवति। अपसव्यं कृत्वा प्रागदक्षिणामुखः उपलेपनोल्लेखनोद्धरणाभ्युक्षणाग्निप्रणयनं प्रदक्षिणं समूहनं ब्रह्मणः प्रविष्टापनं प्रणीताप्रणयनं ततः सान्वाच्यस्तरणं ततोऽग्नेः पुरस्तात्पलाशशाखायाः सपत्राया निखननन्ततस्तस्या उत्तरतः पशुमुपस्थाप्य ततः " पितृभ्यस्त्वा जुष्टमुपाकरोमी"त्यनेन मन्त्रेणोपाकरणं ततः पवित्रोत्पादनम् । उत्तरतः प्रणीताप्रणयनं ततः "पितृभ्यस्त्वाजुष्टं प्रोक्षामी"ति पशोः प्रोक्षणं ततः "पितृभ्यस्त्वाजुष्टंनियुनज्मी"त्यनेन मन्त्रेण पलाशशाखायां बन्धनं ततः पर्यग्नीकृत्वोदग्ग्रीवं प्राक्शिरसमुदक्पादं

प्रत्यक्शिरसं वा मुखमवाञ्चमानं संज्ञप्य वपां गृहीत्वा ततो वपायां हुतायामङ्गानां श्रपणं ततोऽनेनैव प्रकारेण आज्यासादनप्रोक्षणादि कृत्वा स्थालीपाकं श्रपयेत् । इदानीं चरुपर्यग्निकरणं प्राकृतं तावत्कुर्याद्यावदाघाराज्यभागान्तं कृत्वा तत उपस्तीर्य हिरण्यमवधाय वपां गृहीत्वा पुनर्हिरण्यमवधायाभिघार्य ततो महाव्याहृतयश्चतस्रो "येतानृपुर्देवत्राजेहमानो" इति चतस्र एतान् अष्टौ मन्त्रान् पठित्वान्ते स्वाहाकारेण वपां जुहोति । अथ वा "वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ सुकृतस्य लोके मेदसः कुल्या उपधातास्रवन्तिसत्याः सन्तु यजमानस्य कामाः स्वाहे"त्यनेन मन्त्रेण वपां जुहुयात् । ततोऽङ्गेभ्यस्तोकं गृहीत्वा स्थालीपाकं गृहीत्वा स्थालीपाकं पृषाज्यमाज्येन मिश्रयित्वा ततः सकृदाज्यमिश्रद्रव्यस्य द्विः पञ्चावेपाणां त्रिः तत उपर्यभिघारयति । अनेन प्रकारेण महाव्याहृतयश्चतस्रो "येतानृपुर्देवत्राजेहमानाहोत्राविदस्तोम" इति चतस्र एभिरष्टभिर्मन्त्रैः स्वाहाकारान्तैरष्टावाहुतीर्हुत्वा "यन्मा वैश्वस्तनोयम" इति स्विष्टकृतं हुत्वा ततो महाव्याहृतिप्रभृतिप्राजापत्यान्तादितन्त्रशेषं समापनीयम् । एष तावत्पशुपक्षः । स्थालीपाको वेत्युक्तं तद्वक्ष्यामः । उपलेपनोल्लिखनाद्याघाराज्यभागान्तं निर्विकल्पं कृत्वा ततश्चरोरुपरि षण्ढकमालि गृहीत्वा वपाहोममन्त्रेणान्यतरेण हुत्वा ततः पूर्ववदष्टाहुतयः स्विष्टकृतं हुत्वा तत "अनुमत्यै स्वाहे" त्याज्यस्य हुत्वा ततो महाव्याहृतिप्रभृतिप्राजापत्यान्तादितन्त्रशेषं समापनीयमिति ॥

इदानीं जातजातस्य यजमानस्याष्टकाकर्म वक्ष्यामः । "अन्तर्हिता गिरयोऽन्तर्हिता पृथिवी मही मे द्यौरग्निश्च सर्वाभिरन्यमन्तः पितुर्दधेऽहमन्तर्दधे स्वाहा, याश्चिक्षान्तियामदन्त्यपादभाः परिमसर्पीः ओषधीः सर्वस्याप्यवृंभिरन्यमन्तः पितुर्दधेऽहमन्तर्दधे स्वाहा, यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता तन्मे रेतः पिता वृङ्-

भ्रातृभ्योपयाने मङ्गलदेव्यै स्वाहा " एते चत्वारो मन्त्रा म-
हाव्याहृतीनां स्थाने वैकल्पिका भवन्ति मङ्गलदेव्या इत्य-
स्मिन्स्थाने यजमानमातॄणां ग्रहणम् । पायसश्चरुः कर्त्तव्यः वैक-
ल्पिक एव । अपरे तु व्याचक्षते पितृजारजातयोर्द्वयोरपि पक्ष-
योः पायसश्चरुर्वैकल्पिको भवति । द्वयोरप्यष्टकयोरुपलेपनोल्ले-
खनादि ब्रह्मणो विमोकान्तं सर्वं प्राचीनावीतिना प्राग्दक्षिणा-
मुखेन कर्त्तव्यमिति ॥

अपरस्मिन्दिवसे पिण्डपितृयज्ञः कर्त्तव्यः । तस्य विधिः
कल्पे पठितः सोऽत्रैव लिख्यते । अपराह्णे आवसथ्याग्नेः पुरस्तादप-
सव्यं कृत्वा शूर्पं स्थालीं स्फ्यं पात्रीमुलूखलमुसले मेक्षणं च सा-
दयित्वा ततः पश्चादग्नेर्नीत्वा दक्षिणाग्रेषु कुशेषु प्राङ्मुखं स्फ्यं
निधाय तस्योपरिष्टाद्व्रीहीन्पात्र्यां तस्यैव पुरो दक्षिणामुखे शूर्पे
स्थालीं ततो दक्षिणामुखः सव्यं जानु पातयित्वाधोमुखेन मुष्टिना
व्रीहीन् गृह्णाति " देवदत्तायमुष्मै गृह्णामि " इत्यनेन प्रकारेण पि-
तृपितामहप्रपितामहानां नामानि मनसा ध्यायन्मुष्टिमेकं गृह्णाति ।
यथा सृतः सन् स चरुर्नो भवति । ततः पश्चात्कुटित्वा एकवारं
फलिताः कृत्वा चरु श्रपयेत् । ततो संस्कृतेन घृतेनाभिघार्य प्रती-
च्यां दिशि ततः प्रदक्षिणं सकृद्दर्भानग्रे गृहीत्वा प्रदक्षिणमनि-
धनाग्रांस्तृणाति । ततो प्रदक्षिणं सकृदेव पर्युक्षते । ततो यज्ञोप-
वीती भूत्वा प्राङ्मुखो दक्षिणं जान्वाच्य " अग्नये कव्यवाह-
नाय स्वाहा, सोमाय पितृमते स्वाहा, यमायाङ्गिरस्वते पितृमते स्वा-
हा " इतीमा आहुतीः स्थालीपाकस्य लोकप्रसिद्धेन मेक्षणेन हु-
त्वा मेक्षणमग्नौ क्षिपेत् । ततोऽपसव्यं कृत्वा " अपहता असु-
रा रक्षांसि वेदिषद " इत्यनेन मन्त्रेणाग्नेः दक्षिणेन उद्धृत्य ततस्तू-
ष्णीं पर्युक्ष्य " ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया च-

रन्ति परापुरोनिपुरो येभरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् ” इ-
त्यनेन मन्त्रेणाभ्युक्षिते प्रदेशे साग्निकमुल्मुकं दक्षिणार्द्धे “
देवदत्तअवनेनिक्ष्व येचत्वामत्रानु ” अनेन मन्त्रेण स्वपितुर्नामो-
च्चार्योपात्तानन्तर्मध्यदङ्गुष्ठायन्तरेण कुशोप्यपो निषिञ्चति । तत अनेनैव
प्रकारेण दक्षिणतः पितामहस्य प्रपितामहस्य च हुतशेषं त्रीणि
पिण्डानि कृत्वा ततो “ देवदत्तएतत्तेयेचत्वामत्रानु ” इत्यनेन
मन्त्रेण पुनरावृत्त्येन पितृपितामहप्रपितामहानां नामान्युच्चार्य यथाक्र-
मिकं पिण्डान् दद्यात् । तत “ अत्रपितरोमादयध्वंयथाभागमावृ-
षायध्वम् ” मिति जपित्वा ततस्तूर्ष्णीं प्रदक्षिणं पर्यावृत्य
प्रत्यङ्मुखो भूत्वा त्रीन् प्राणायामान् धारयित्वा ततस्तूर्ष्णीं प-
र्यावृत्य पिण्डाभिमुखो भूत्वा “ अमीमदन्तपितरोयथाभागमा-
वृषायिषत ” ति जपति । ततः पूर्ववदवनेनिज्य “ नमोवः पितरो
जीवायनमोवः पितरः शोषायनमोवः पितरो घोरायनमोवः पित-
रोरसाय नमोवः पितरो स्वधायैनमोवः पितरो मन्यवे नमोवः पि-
तरो भूतयेनमोवः पितरः स्वधायैनमोवः पितरः पितरोनमोवो ये
अत्र पितरः पितरस्ते यूयन्तेषां श्रेष्ठा भूयास्त्य यद्ह पितरो मनु-
ष्यान्वयं तेषां श्रेष्ठाभूयास्म येअत्र पितरः स्वधा युष्माकं सा च-
इहपितर एवन्तुरस्माकं सन्तो नः पितरो दत्त ” इतीमं मन्त्रं ज-
पित्वा तत “ एतद्वः पितरोवासोमावध्वंपितर ” इत्यनेन मन्त्रेण पु-
नरावृत्त्येन प्रथासामपि पिण्डानां यथा भवन्ति तावन्मात्राणि सू-
त्राणि दत्वा तत “ ऊर्जंवहन्तीरमृतंघृतं पयः कीलालं परिस्रुतं
स्वधास्थतर्पयत नः पितॄन् ” इत्यनेन मन्त्रेण पात्रप्रक्षालनं कुशे-
ष्वेव निक्षिप्य तत आघ्राय पिण्डान् पात्रे कृत्वा प्राश्नीयात् ।
अप्सु वा प्रास्य दद्यात् । उदके वा क्षिपेत् । यदि पत्नी पुत्र-
कामा स्यात्तत “ आधत्तपितरोगर्भंकुमारं पुष्करस्रजं यथेहपुरुषो

नमः " इत्येतेन मन्त्रेण मध्यमपिण्डं आमनीयात् । ततस्तूष्णीमु-
ल्मुकमग्नौ क्षिपेत् । सकृदाच्छिन्नांश्च कुशानग्नौ क्षिप्त्वा अमद-
र्शनं पर्युक्षेत् । दत्तकादयो ये पुत्रास्ते एकैकस्मिन्प्रदेशे द्वौ पि-
ण्डौ ददाति येन जातो यस्य च सङ्गत इति । जीवत्पितृकेण पिण्ड-
पितृयज्ञो न कर्त्तव्यः । अथ करोति पितृणां होमान्तं वेति । इदं च
[illegible] तन्त्ररहितं यावदुक्तं भवति । आहुतीर्हुत्वा शेषमपसव्येनेति
मध्यमायामपूपं जुहोति । अष्टकायै ग्रहणमुपलेपनोल्लेखनादिद्रव्यमो-
क्षणान्तं कृत्वा पिष्टमयान् कपालपर्काग्नीनपूपान् कुर्यात् । अपरे
त्वाचक्षते घृतपूपाः कर्त्तव्याः । अन्यान्सजातीयान् पूपान्पक्त्वा करो-
ति वा । आघाराज्यभागान्ते कृत्वा "उत्तरमातिरात्रञ्च सर्वमक्षीच्छ-
न्दसा सहाऽपूपकृदष्टके नमस्तेऽमुमनामुखिस्वाहे" त्यनेन मन्त्रेणा-
पूपावदानं समवत्तधान्यां कृत्वा गृहीत्वा चरुधर्मेण जुहोति । "य-
स्यावैश्वरवतोयम" इति स्विष्टकृतं हुत्वा महाव्याहृतिसर्वप्रायश्चि-
त्तादितन्त्रशेषं समापनीयमिति ॥ मध्यमायां माध्यवर्षे च गोपशुर-
जः स्थालीपाको वेत्युक्तम् । एतेषामसंभवे "एषामेष्टके" त्यनेन
मन्त्रेण अकारान्तेन परगोरेकस्यं वृषये यवसं दद्यात् । अथ वा
अनेनैव मन्त्रेण तृणबहुलस्थाने तृणदहनं कर्त्तव्यम् ॥

इति अहिच्छत्राविषये कौथुमवालस्यवासुदेवकृतमाह्यायनगृह्यसङ्ग्रहे तृतीयोऽध्यायः समाप्तः ॥

श्राद्धं वक्ष्यामः । पूर्वेद्युर्ब्राह्मणान् वेदविदः पञ्च निमन्त्र्या-
ऽभावे त्रीन् वा एकमेव वा ततोऽपराह्णे पिण्डीपतृयज्ञवत्ता ततो ब्रा-
ह्मणानाहूय परिवृते प्रदेशे द्वौ प्राङ्मुखौ त्रय उदङ्मुखाः कार्याः ।
प्राङ्मुखानां सर्वं यज्ञोपवीती प्रदक्षिणोपचारश्च कुर्यात् । उदङ्मु-
खानां सर्वं प्राचीनावीती विपरीतोपचारं च कुर्यात् । सर्वं च दै-
वपूर्वं कर्त्तव्यम् । दर्भा आसनार्थाः प्राङ्मुखानामृजवः । उदङ्मु-

स्तानां द्विगुणीकृत्य दातव्याः। यदि त्रयो ब्राह्मणास्तत्र द्वौ प्राङ्मुखौ एक उदङ्मुखः, यदि द्वौ तत्र एकः उदङ्मुखः एकः प्राङ्मुखः, यद्येकस्तत्र उदङ्मुखः प्राङ्मुखब्राह्मणस्थाने अग्निः स्थापयितव्यः। दर्भासनादनन्तरं यजमानो ब्राह्मणाश्च वाग्यमनं कुर्युः। तत्र आवाहनम्। "विश्वेदेवानावाहयिष्ये" इत्यनेन मन्त्रेण प्राङ्मुखं पृच्छत्येकम्। ततः "आवाहये"त्यनेन मन्त्रेणाभ्यनुज्ञातः "विश्वेदेवासः आगत"इत्यनेन मन्त्रेणावाह्य ततो "विश्वेदेवाःशृणुतेमं हवम्" इति जपति। तत्र "ओषधयः समवदन्त"इत्यनेन मन्त्रेणास्तैर्वेष्टयति। ततः "पितॄनावाहयिष्ये"इत्यनेनोदङ्मुखान् पृच्छति। "आवाहय" इत्यनुज्ञातः "उशन्तस्त्वानिधीमही"त्यावाह्य तत "आयन्तु नः पितरः अपहता असुरा रक्षांसि वेदिषद" इति तिलैरवकीर्य ततः पलाशैकङ्कतकाश्मर्यबिल्वखादिरोदुम्बराणामन्यतमस्काष्ठकृतानि समानि पर्णपुटानि वा मृण्मयानि वा मणीरजतसुवर्णताम्राणामन्यतमद्रव्यकृतानि पितृसमानसंख्याकानि पात्राणि कृत्वा द्वौ द्वौ कुशौ तिस्रस्तिस्रो वा उपर्यन्तर्धाय पात्रं "शन्नोदेवीरभिष्टय" इत्यनेन मन्त्रेणाद्भिरापूरयित्वा "तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वाहाकारेण देवान् प्रीणाहि नः स्वाहे"त्यनेन मन्त्रेण यवैरवकीर्य प्राङ्मुखाभ्यां ब्राह्मणाभ्यां दक्षिणहस्तमेकीकृत्य उदपात्रकुशौ प्राङ्मुखौ दत्वा तिलो वा ततो "याद्दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्तान आपः शिवा मे स्योनाः सुहवा भवन्तु" इति पठित्वा "विश्वेदेवा एषवोऽर्घ्यम्" इत्यनेन मन्त्रेण निनयेत्। ततोऽपदक्षिणामुखो भूत्वा दक्षिणाग्रकुशावेकस्य ब्राह्मणस्य हस्ते दत्वा ततो "याद्दिव्या आप"इत्येवमादिकं मन्त्रं पठित्वा "पितरेतत्तेऽर्घ्यं" इत्यनेन मन्त्रेण पितृतीर्थेन ब्राह्मणहस्ते निन-

यः । एवं पितृपितामहप्रपितामहानां नामान्युच्चार्यार्घ्यं एकैकस्य ह-
स्तेऽर्घ्यं दद्यात् । यदि ब्राह्मणा बहवो निमन्त्र्यन्ते ततो हस्तानेकीकृत्या-
र्घं दातव्यम् । ततः पुत्रकामः "शुन्धन्तांलोकाः पितृषदनाः" इत्यने-
न मन्त्रेण मुखं विमार्ष्टि । ततोऽर्घ्यपात्राणि पात्रान्तरे निवेशयित्वा
ततः "पितृभ्यः स्थानमसी" त्यनेन मन्त्रेण तत्पात्रमध्ये कुर्यात् ।
ततो गन्धपुष्पधूपादीनि यथानियमं प्रदाय गृहादेव सिद्धं घृताक्त-
मन्नं गृहीत्वा "अग्नौकरिष्ये" इति ब्राह्मणान् पृच्छति । ततः "कु-
रुष्वे" ति ब्राह्मणैरनुज्ञातः परिसमूहनादिहोमान्तं सूत्रैः पिण्डपितृ-
यज्ञवत् कृत्वा हुतशेषं ब्राह्मणहस्तेषु ददाति । ततस्तस्मिन्नेव प्र-
देशे यस्मिंश्चिद्गृहे सिद्धं तत्सर्वमानीय परिवेषयित्वा ततः "पृ-
थिवीतेपात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमिस्वाहा"
इत्यनेन मन्त्रेण पात्रमालभेत् । तत "इदं विष्णुर्विचक्रमे" इति
अङ्गुष्ठग्रहणं कृत्वा अन्नेऽवगाह्य ततो "विश्वेदेवा एतद्वोऽन्न"मिति प्रा-
ङ्मुखाभ्यां ब्राह्मणाभ्यां कल्पयित्वा ततः "देवदत्तैतत्तेऽन्नंये-
चत्वामत्रानु" अनेन प्रकारेण पितृपितामहप्रपितामहानां नामा-
न्युच्चार्योदङ्मुखब्राह्मणेभ्यः पात्राणि कल्पयित्वा ब्राह्मणानां
भोजनानुज्ञां ददाति । ततो भुञ्जानेषु ब्राह्मणेषु महाव्याहृतय-
श्चतस्रः "तत्सवितुर्वृणीमहे" इत्येका "मधुवाता ऋतायते" इति
तिस्रः "उदीरतामवर उत्परास" इति चतुर्दश "स्वादिष्ठया मं-
दिष्ठये" ति च शक्तितो जपेत् । "सहस्रशीर्षेति" षोडश अन्या-
नि च पवित्राणि शक्तितो जपेत् । ततस्तृप्तेषु ब्राह्मणेषु "तृप्ता-
स्थ" इति पृच्छति । ततो ब्राह्मणा "तृप्ताःस्म" इति ब्रूयुः ।
ततः "शेषमन्न" मिति पृष्टा ब्राह्मणा "इष्टेभ्यः" इति ब्रूयुः ।
ततोऽपोशानं दत्त्वा पिण्डान् दद्यात् । ततः सर्वमन्नमेकस्मिन्पात्रे
कृत्वा "अपहता असुरा रक्षांसि वेदिषद" इत्यारभ्य सकृदाच्छि-

श्रानुप्रहरणान्तं पिण्डपितृयज्ञवत्करोति । ततः स्वस्य पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्द्धाय भर्तॄणामिव पिण्डदानं कार्यम् । कथम् ? । "मङ्गलदेवि अननोनिस्त्वयेचत्वामश्नातु, रुद्देविपतसेपिण्डोयेचत्वामश्नातु" इति अनेन प्रकारेण । होमादनन्तरं पिण्डदानमिच्छन्ति । ततः आचान्तेषु " शीयन्ता" मिति माङ्गुष्ठौ कल्पयित्वा "देवदत्तस्तृप्यता" मिति पितृपितामहप्रपितामहानां नामान्युच्चार्योच्चार्योदङ्मुखान् कल्पयित्वा शक्तितो दक्षिणां दत्त्वा "वाजेवाजेवतवाजिनो" इति विसर्जयेत् । अस्मिन् कर्मणि यच्छाङ्खायने नोक्तं तत्सर्वमन्यदीयमिति ॥

एकोद्दिष्टश्राद्धं वक्ष्यामः । वैश्वदेवकं कर्म कुर्यात् । जदस्तु-त्वा ब्राह्मणा उपवेश्याः । पूर्ववदुपचारः । विशेषस्तूच्यते । आवाहनमग्नौकरणं च न कुर्यात् । एकं पवित्रमेकं चार्घ्यं पत्नीवर्जमेकः पिण्डः "स्वदित" मितितृप्तिप्रश्नः "उपतिष्ठता" मित्यक्षय्यस्थाने "अभिरम्यता" मितिविसर्जनम् "अभिरताःस्म" इति ब्राह्मणा ब्रूयुः । एवं पितर्युपरते एकादशेऽहनि कृत्वा तावन्मृताहनि मासे मासिकं कर्त्तव्यं यावत्संवत्सरोऽपूर्णः । ततश्चत्वारि पात्राणि गन्धोदकेन पूरयित्वा त्रीणां पितॄणामेकं प्रेतस्य "ये समानाः समनसः पितरोयमराज्ये तेषां लोकःस्वधानमोयज्ञोदेवेषुकल्पतां येसमानाः समनसो जीवा जीवेषुमामकाः तेषां श्रीर्मयिकल्पतामस्मिल्लोके शतं समाः" इति मन्त्रद्वयेन प्रेतपात्रं पितृपात्रेष्वासिञ्चति । पिण्डेष्वेवमेव कर्त्तव्यः । एवं सपिण्डीकरणं कृत्वा ततः पार्वणे पितृपितामहप्रपितामहेभ्यो दद्यात् । पैतृकस्तु प्रपितामहं वर्जयेत् । एतच्च सपिण्डीकरणं पुत्रैः करणीयम् । श्राद्धं वक्ष्यामः । सर्वं यज्ञोपवीतिना पितृकर्त्तव्यम् । अपुत्रस्य संवत्सरे

...ति मन्त्रैः एकोद्दिष्टं कुर्तव्यम् ॥

आभ्युदयिकं श्राद्धं वक्ष्यामः । पैतृकमन्त्रा न जप्याः ऋजवो दर्भाः यवैस्तिलार्थः । तृप्तिप्रश्ने "सम्पन्न" मितिपृच्छेत् । दधिबदरा- क्षतमिश्राः पिण्डाः । "नान्दीमुखाः पितरः प्रीयन्ता"मित्यक्षय्यस्था- ने । शेषं समानं पार्वणेन ।

अथोपाकरणं वक्ष्यामः । ओषधीनां प्रादुर्भावे हस्तेन श्रवणेन वा । अन्ये तु प्रादुर्भावकाल इति पठन्ति । तेषामप्रादुर्भूतास्वप्योष- धीषु हस्तश्रवणाभ्यामन्यतरस्मिन्नक्षत्रे कर्तव्यम् । अत्र स्तरणा- द्याज्यभागान्ता निर्विकल्पाः । आयतनाग्रादुपलेपनोल्लेखनान्तं कृ- त्वा ततः पवित्रोत्पादनाद्याघाराज्यभागान्तं कृत्वा तत अक्षणितः सक्तवो धानाश्च यवा दधि घृत चतुष्टयमेकीकृत्यावदानधर्मेण "अ- ग्निमीळेपुरोहित"मित्यारभ्य स्वाहाकारान्तैर्मन्त्रैः प्रत्यृच जुहुयात् आपरिसमाप्तेः एवमेके आहुः । सूक्तानुवाकाद्याभिरिति वा । पूर्व- पक्षस्य पक्षान्तरमेतत् । अध्यायार्धैर्वाभिरिति माण्डूकेयमतम् । श्रुती- प्रायेण सर्वाण्यपि मतानि पूर्वपक्षीकृत्य कौषीतकिमतमेव सिद्धान्तो भूतः अस्माभिः शिष्टैस्तदेवाङ्गीकृतः । आज्यभागानन्तरं शिष्या म- न्त्रारम्भे । मन्त्रोच्चारणमाचार्येण सहैव कुर्वन्ति । "अग्निमीळे- पुरोहित"मित्यारभ्य "तच्छंयोरावृणीमहे" इति यावत्प्रकारेणैव कृता पद्धतिः । स्विष्टकृतं हुत्वा हुतशेषादेकदेशं गृहीत्वा आचा- र्यः शिष्यो गृहस्यमन्त्रोच्चारणसमये "दधिक्राव्णोअकारिष"मित्यनेन मन्त्रेण प्राश्नाति । तत आचम्योपविश्य महाव्याहृतिसावित्रीवेद- प्रभृतीनि स्वस्त्ययनानि जपित्वा ततः शिष्या आचार्याय किंचिद्- त्वा "स्वस्तिभवन्तोब्रुवन्तु"इति वदन्ति । तत आचार्य"ॐस्वस्ती" ति ब्रूते । ततो महाव्याहृतिसर्वप्रायश्चित्तादिकन्त्रशेषं समाप्य पि- त्वा त्रिरात्रमनध्यायं कुर्वन्ति ॥

उत्सर्गकर्म वक्ष्यामः । माघशुक्लप्रतिपदि ग्रामबाह्यतः च्यां दिशि यवगोधूमादिसम्पन्नं प्रदेशं गत्वा आचार्यः कृतशौचः “उदुत्यंजातवेदस”मिति त्रयोदश “चित्रंदेवानामुदगा”दिति च “नामामित्रस्यवरुणस्यचक्षस” इति द्वादश “सूर्योनोदिवस्पात्वि”तिपञ्च एवा ऋचो जपित्वा ततः “शासइच्छामहेअसी”तिपञ्चर्चैः पुरस्ताद्द्वारस्य प्रदक्षिणं मृल्लोष्टान् प्रत्यृचं क्षिपेत् । उपरि पञ्चपञ्च । ततः आचार्यः सशिष्य ऋषींश्छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा ततः पितृपितामहप्रपितामहान् स्वान् स्वान्तर्पयन्ति । ततः द्विसप्तान्मासान्नाध्येयम् । तर्पणविधिं चोपरिष्टाद्वक्ष्यामः । अपरे तु व्याचक्षते । ब्राह्मणान् भोजयित्वा ऋष्यादींस्तर्पयेत् । यत्रयस्य पठेत्ततो ऽहोरात्रं क्षपयित्वा पठेत् । अस्मिन्नवसरेऽनध्यायाः पठिताः । ते च सूत्रानुक्रान्ता एव कर्त्तव्याः आनुपूर्व्या प्रयोजनमेव नास्तीति पद्धतिर्न कृता ॥

अध्यापनविधिं वक्ष्यामः । अनसूयवो ब्रह्मचारिण ऋजवः सन्तः संयतेन्द्रियाः शुचयोऽध्ययनशीला मेधाप्रतिभान्यायोपगता एवंलक्षणाः शिष्या अध्यापयितव्याः । आचार्यः प्राङ्मुख उपविशति उदङ्मुखो वा, दक्षिणतः शिष्य उदङ्मुखः प्रत्यङ्मुखो वा । शेषा आचार्याभिमुखा यथावकाशमुपविशन्ति । ततः “ अधीहिभो ” इत्याचार्यः शिष्यं प्रचोदयति । ततः आचार्येण निगदिते ओङ्कारं कृत्वा शिष्याः पठन्ति । ततः सततं पठित्वा समाप्ते पाठके “विरतास्मभो” एवमुक्त्वा भोक्तुं गच्छामो मूत्रपुरीषे कर्तुं गच्छाम इति स्वं स्वं प्रयोजनं कथयन्ति “विरमास्म” इत्येतस्य स्थाने । विसृष्टविरामास्तावत्स्युः पठतामन्तरेण पाठको गच्छेत् । न चान्तरेण गन्तु दातव्यम्प्रायश्चित्तीश्वमार्जारादिकमन्तरेण गच्छे-

त्रिरात्रमुपोष्याहोरात्रं वा पुनः सावित्रीं जपेत् । ब्राह्मणेभ्यः कि

[illegible]रात्रमप्युपरम्य अध्ययनम् ॥

ऋषितर्पणं वक्ष्यामः । तच्च समाप्तस्य भवति । स्नात्वा [illegible]न्ते "अग्निस्तृप्यतु, वायुस्तृप्यतु, सूर्यस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु, सोमः, ब्रह्म, वेदाः, ऋषयः, सर्वाणि छन्दांसि, ओङ्कारः, वषट्कारः, महाव्याहृतयः, सावित्री, यज्ञाः, द्यावापृथिवी, नक्षत्राणि, अन्तरिक्षम्, अहोरात्राणि, संख्याः, सन्ध्याः, समुद्राः, नद्यः, गिरयः, क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः, नागाः, वयांसि, सिद्धाः, साध्याः, विप्राः, यक्षाः, रक्षांसि, भूतान्येवमन्तानि तृप्यन्तु, श्रुतिं तर्पयामि, स्मृतिं तर्पयामि, धृतिं तर्पयामि, रतिं तर्पयामि, मतिं तर्पयामि, श्रद्धामेधे, धारणां च, गाः, ब्राह्मणं, स्थावरं, जङ्गमानि, सर्वभूतानि तृप्यन्तु ". इति यज्ञोपवीती । अथ प्राचीनावीती पित्र्यां दिशमीक्षमाणः " शतर्चिनः, माध्यमाः, गृत्समदः, विश्वामित्रः, जमदग्निः, वामदेवः, अत्रिः, भरद्वाजः, वसिष्ठः, प्रगाथाः, पावमान्यः, क्षुद्रसूक्ताः, महासूक्ताः, सुमन्तुः, जैमिनिः, वैशंपायनः, पैलः, सूत्रभाष्यकृतः, गार्ग्यबभ्रुबाभ्रव्यमण्डुमाण्डव्याः, गार्गी, वाचक्नवी, वडवा, प्रातिथेयी, सुलभा, मैत्रेयी, कहोलः, कौषीतकिः, महाकौषीतकिः, सुयज्ञः, शाङ्खायनः, आश्वलायनः, ऐतरेयः, महैतरेयः, भारद्वाजः, जातूकर्ण्यः, पैङ्ग्यः, महापैङ्ग्यः, बाष्कलः, गार्ग्यः, शाकल्यः, माण्डूकेयः, महादमनः, उद्वाहः, औदवाहिः, सौयामिः, शौनकिः, शाकपूणिः, ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु " एवं प्रत्येकमुदकाञ्जलिं दत्वा ततः पितृपक्षप्रमीतानामात्मनामान्युच्चार्याचार्यं तर्पणं करोति । तद्यथा " देवदत्तस्तृप्यतु, मित्रभूतिस्तृप्यतु, यज्ञदत्तस्तृप्यतु " इति । ततः "पितृवंशास्तृप्यन्तु " इत्यञ्जलिं क्षिपेत् । अस्मिन्नन्तरे न नग्नां

स्वियमीक्षेत इत्येवमाद्याचारः पठितः समस्त एव कर्त्तव्यः । आनुपूर्व्येण प्रयोजनमेव नास्तीति पद्धतिर्न कृता ॥

कृषिकरणकर्म वक्ष्यामः । रोहिण्यां हलयोजककर्णमालवादीनां प्रारम्भे यत्कार्यं तदन्येन ब्राह्मणेन कारयितव्यम् । गृहादेव सिद्धं हविष्यमन्नं गृहीत्वा क्षेत्रस्य पुरस्तात् " महीद्यौः पृथिवीचनइमंयज्ञ " मिति मन्त्रेण नमस्कारान्तेन बलिं दत्त्वा ततो " नमोद्यावापृथिवीभ्यां होतृभ्यां पूर्वसूभ्यां विश्वकर्मणोनूपोमेष्ठमेपातमाहिंसिष्टं मस्मा सन्तास " मिति प्रतिदिशमुपस्थानं कृत्वा वापयति ॥

उदकतरणकर्म वक्ष्यामः । यस्यां दिश्युदकमागच्छति तस्यां दिश्यभिमुखो भूत्वा " सर्वासापित्रेविश्वकर्मणोमनुहविर्जुषना " मिति जपित्वा ततः " समुद्रायवैणवेनवः स्वाहा, नमोवरुणायधर्मपतयेस्वाहा, सर्वाभ्योनदीभ्यः स्वाहा " इति उदकाञ्जलीस्त्रीनप्सु जुहोति । अथ वा स्थावराय । तत एभिरेव मन्त्रैः सलिलमूर्द्ध्वमुत्क्षिप्य ततः तरेत् । तरन्भयं यदि वाङ्केद्वासिष्ठं सूक्तं किञ्चिज्जपित्वा ततः "समुद्रज्येष्ठाः सलिलस्यमध्या" दिति जपेत् । अपरे त्वेवं वर्णयन्ति । " समुद्रज्येष्ठा " जपेदिदमेव वासिष्ठमिति ॥

श्रावणीकर्म वक्ष्यामः । तत्र श्रवणे पूर्णमास्यां कर्त्तव्यम् । अत्र स्तरणाद्याराज्यभागा निर्विकल्पाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततोऽक्षतसक्तूनां स्थालीपाकस्य जुहुयात् । "विष्णवेस्वाहा, श्रावण्यैपौर्णमास्यैस्वाहा, वर्षाभ्यः स्वाहे " ति हुत्वा ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

सर्पबल्युपकर्म वक्ष्यामः । अत्र स्तरणाद्याराज्यभागा निर्विकल्पाः । अस्यामेव पौर्णमास्यां गृहमेव बाह्यतः कृत्वा ततः अक्षतसक्तूंश्च घृतेन मिश्रयित्वा अवदानधर्मेण द्व्यवदाना

सर्पाणां पूर्वार्धे जुहोति । "देवेभ्यः सर्पाधिपतये स्वाहा, अद्भ्यः स्वाहे"ति पश्चार्धेन जुहोति । तत एताभ्यामेव मन्त्राभ्यामधिपतये पुरस्तात्पुरस्तात् सर्पेभ्यः पश्चादेवं षडाहुतीर्हुत्वा ततोनेनैव प्रकारेणान्तारेखाणां दिव्यानां पार्थिवानां षट्षडाहुतयो हूयमानाश्चतुर्विंशतिर्भवन्ति । होमानन्तरमग्नेरुत्तरतः प्रागग्रेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य ततश्चतुर्ष्वपि स्थानेषु कुशान् भूमौ निधाय ततो "दिव्यानां सर्पाणामधिपतिरवनेनिक्ता"मित्यनेन मन्त्रेणोदकुम्भस्योत्तरतो ये कुशा निहिताः तेषां पूर्वार्धे हस्तेनोदकमासिञ्चति । "दिव्याः सर्पा अवनेनिजता" मित्यनेन मन्त्रेण यथोक्तेनाद्यप्रकारेण पश्चार्धे आसिञ्चति । अधिपतये पुरस्तात्पुरस्तात्तैः सर्पेभ्यः पश्चात्पश्चात्तैरेव एवं षट् भवन्ति । एवमुत्तरेष्वपि द्रष्टव्यम् । "दिव्यानां सर्पाणामधिपतिः प्रलिखतां दिव्याः सर्पाः प्रलिखन्ता" मिति फल्केनाप्सु षट्स्वपूदकनोद्धेषु स्पृशति । ततो "दिव्यानां सर्पाणामधिपतिः प्रलिम्पतां सर्पाः दिव्याः प्रलिम्पन्ता"मिति सुगन्धिना विलेपनेन तथैव लिम्पति । "दिव्यानां सर्पाणामधिपतिराबध्नीतां दिव्याः सर्पा आबध्नीता"मिति सुगन्धिपुष्पाणि क्षिपति । "दिव्यानां सर्पाणामधिपतिराच्छादयतां दिव्याः सर्पा आच्छादयन्ता" मिति सूत्रतन्तुमुपहरति । "दिव्यानां सर्पाणामधिपतिराङ्क्तां दिव्याः सर्पा आञ्जता"मिति कुशतरुणेन सौवीरमञ्जनं क्षिपति । "दिव्यानां सर्पाणामधिपतिरीक्षतां दिव्याः सर्पा ईक्षन्ता"मिति आदर्शेनैवमेवेक्षयति । "दिव्यानां सर्पाणामधिपतिरेष तेबलिर्दिव्याः सर्पा एष वो बलि"रिति हविष्यमन्नं ददाति । उदकदानकंकतवेष्टनवर्णकप्रोल्लम्पनपुष्पप्रकिरणसूत्रतन्तुप्रक्षेपणाञ्जनादर्शेक्षणबलिदानानि अष्टौ पदार्था, दिव्यानां सर्पाणामधिपतीनां दिव्यानां च सर्पाणां षट्कृत्वोऽनुष्ठीयमाना अष्टाचत्वारिंशद्भवन्ति । एकीकृत्य दि-

नवनं शतं च भवति। एतत्कृत्वा ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। अन्ये त्वेवं व्याचक्षते "दिव्यानांसर्पाणामधिपतयेस्वाहा, दिव्येभ्यः सर्पेभ्यः स्वाहेति" आहुतिद्वयमेव हुत्वा तत उदकुंभपूरणादिबलिहरणान्तं कर्त्तव्यम्। चतुर्विंशत्याहुतयो न होतव्या इति। ततोऽनेनैव प्रकारेणाऽक्षतसक्तुभिर्लोकप्रसिद्धेन सर्पेभ्य उदकपूर्वं रात्रौ वाग्यतो बलिहरणं कुर्यात्। पत्नी च वाग्यता बलिमुपसादयेत्। मार्गशीर्षशुक्लचतुर्दशी यावत् सर्पकर्म येन कृतं॥ "सुत्रामाणंपृथिवींद्यामनेहस"मित्यनेन मन्त्रेण शय्यामारोहते। ततश्चतुरो मासान् मैचकशायी स्यादिति॥

आश्वयुजीकर्म वक्ष्यामः। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। आश्वयुज्यां पौर्णमास्यामुपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा पायसस्य चरुः "इन्द्रायस्वाहा, अश्विभ्यांस्वाहा, अश्वयुग्भ्यांस्वाहा, आश्वयुज्यैपौर्णमास्यैस्वाहा, अश्वपतयेस्वाहा, पिंगलायस्वाहे" ति षडाहुतीराज्यस्य हुत्वा ततः क्षीरघृतविकीर्णस्य "आगावोअग्म" न्नित्यष्टर्चैः प्रत्यृचमेवमष्टावाहुतीः स्रुवेण हुत्वा ततः समवध स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य ब्राह्मणान् भोजयेत्। गाश्च सवत्सा एवैतांरात्रिं वासयेत्। अपरे तु व्याचक्षते। घृतमिश्रस्य दध्न "आगावोअग्म" न्नित्यष्टावाहुतयो होतव्याः॥

आग्रहायणीकर्म वक्ष्यामः। मार्गशीर्षपौर्णमास्यां येनैव कर्मणा सर्पबल्युपक्रमं कृतंतेनैवोत्सर्गं कृत्वा ततः "शंनोमित्रः शंवरुणः"इत्यनेन मन्त्रेण पलाशशाखया गृहमध्ये भूम्येकदेशं शोधयित्वा ततः "समुद्रादूर्मिर्मधुमांउदारादि"त्यनेन मन्त्रेणाऽद्भिरभ्युक्ष्य "स्योनापृथिविभवे" त्यनेन मन्त्रेण स्तरणमास्तृणाति। ततो

थुनक्राश्चीमथुनादीनि यावदुपलभ्यन्ते एतानि सर्वाणि बदरीपात्रादिमयानि कृत्वा ऐन्द्राग्नी दीर्घकुम्भे लम्बोदरे पुरुषाकृती कर्त्तव्ये । रौद्रा गोलकास्तु दृचास्रयः एतत्सर्वं पिष्टस्य कृत्वा ततः पूर्णदाघाराज्यभागान्तं कृत्वाऽवदानधर्मेण ऐन्द्राग्नदेवश्चरुः "इन्द्राग्निभ्यां स्वाहे"ति हुत्वा ततश्चरुधर्मेणैव गोलकेभ्योऽवदानधर्मेण सपत्त्वथान्या कृत्वा गृहीत्वा "रुद्राय स्वाहे"ति ततः सर्वेभ्योदघाप्ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

इति अहिच्छत्राविषये कौशुंबरवास्तव्यश्रीवासुदेवकृते साङ्ख्यायनगृह्यसंग्रहे चतुर्थोऽध्यायः समाप्तः ॥

समाप्तोऽयं ग्रन्थः ॥



श्रीगणेशाय नमः ।

# अथ कौषीतकिगृह्यसूत्रम् ।

हरिः ॐ

अथातः पाकयज्ञान् व्याख्यास्यामोऽभिसमावर्त्स्यमानो य-
मन्त्यां समिधमभ्यादध्यात् तमग्निमिन्धीत वैवाह्यं वा दायाद्यकाले
एके प्रेते वा गृहपतौ स्वयं ज्यायान् वैश्यात्वाधानमात्रास्यायामन्य-
स्यां वाऽकामनो नक्षत्र एके पुरुषपशुविट्कुलाम्बरीषबहुयाजिनां-
न्यतमस्माद्वाग्निमिन्धीत सायं प्रातरेके सायमाहुतिसंस्कारोऽस्य-
पुमस्थ इत्याचार्याः । प्रातः पूर्णाहुतिं जुहुयाद्द्रुणवपर्वा तूष्णीं
वा । तस्य प्रादुष्करणहवनकालावग्निहोत्रेण व्याख्यातौ । य-
ज्ञोपवीतीत्यादि च सम्भवत्सर्वम् । कल्पैकत्वात् । तदप्याहुः—

पाकसंस्था हविःसंस्थाः सोमसंस्थास्तथापराः ।
एकविंशतिरित्येता यज्ञसंस्थाः प्रकीर्तिताः ॥ ॥ १ ॥
कर्मापवर्गे ब्राह्मणभोजनम् । वायुर्वयःश्रुतशीलवृत्तानि गुणाः ।
श्रुतं तु सर्वानत्येति । न श्रुतमतीयात् ॥
अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम् ।
मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते ॥
क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम् ।
भोजयेत् तं सकृद्यस्तु न तं भूयः क्षुदश्नुते ॥
यां तिलपर्यिषेत् कांश्चिद्देवतां सर्वकर्मसु ।
तस्यै उद्दिश्य मनसा दद्याद्देवांशियः प्र वै ॥
नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित् ।
निधिरेष मनुष्याणां देवानां पात्रमुच्यते ॥ ॥ २ ॥

अथ दर्शपूर्णमासाः । उपोष्य प्रातर्वैश्वदेवमहादक्षाऽग्राणि

सूर्य आनयति स होमकालः स्वस्त्ययननमः । सर्वासामाहुतामन्यत्र निर्देशात् सुमनाः शुचिः शुचौ वरूथ्यदेशे पूर्णविधानं चरुं स्न-पयित्वा दर्शपूर्णमासदेवताभ्यो यथाविभागं स्थालीपाकस्य जुहोति । स्थालीपाकेषु च ग्रहणासादनप्रोक्षणानि, मन्त्रदेवताभ्योऽवदानधर्माश्च । पूर्वं तु दर्शपूर्णमासाभ्यामन्वारम्भणीयदेवताभ्यो जुहुयादापौर्णमासादर्शस्यानन्तीतः कालः, आदर्शात् पौर्णमासस्य । प्रातराहुतिं चैके सायमाहुतिकालेऽग्न्याधानमन्यन्ते, नियतस्त्वेव कालोऽग्निहोत्रे प्रायश्चित्तदर्शनात् भिन्नकालस्य नित्याहुत्योर्व्रीहियवतण्डुलानामन्यतमद्रव्यैः कुर्यात्, तदभावेऽन्यदप्रतिषिद्धम् । तण्डुलोऽन्न, मक्षाल्यैक इतरेषामसंस्कारः । सायमग्नये प्रातस्सूर्याय प्रजापतये चानुमन्त्रं तूष्णीं प्राक् प्रागाहुते समिधमेके, यथोक्तं पर्युक्षणम् ॥ ३ ॥

उत्थाय प्रातराचम्याहरहः स्वाध्यायमधीयीताग्ना नो देव सवितरिति द्वे, अपेहि मनसस्पत इति सूक्तम्, ऋतं च सत्यं चेति सूक्तमादित्या अवहित्यनेति सूक्तशेषः, इन्द्रश्रेष्ठानीत्येकाहंसः शुचिषदित्येका, नमो महद्भ्य इत्येका, यत इन्द्र भयामह इत्येका यस्मिन्नित्येका, यो मे राजन्नित्येका, ममाग्ने वर्च इति सूक्तं, स्वस्ति नो मिमीतामिति च पञ्च ॥ ४ ॥

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति पञ्चसु बाहिः शालाया विवाहे चूडाकरणे उपनयने केशान्ते सीमन्तोन्नयन इत्येषु कृते उद्धतावोक्षितेऽग्निं प्रणीय निर्मथ्यैके विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयात् या लक्षणसंपन्ना स्यात् । यस्या अभ्यात्मङ्गानि स्युः । समाः केशान्ताः आवर्तावपि यस्यै स्यातां प्रदक्षिणौ ग्रीवायां षड् वीराञ्जनयिष्यतीति विद्यात् ॥ ५ ॥

वन्ति प्रागग्रे धारयन् वैष्णव्यावित्यभ्युत्य कुशतरुणाभ्यां भ्रदक्षि-णमग्निं त्रिः पर्युक्ष्य,महीनां पयोऽसीत्याज्यस्थालीमादायैवे त्वेत्यधि-श्रित्योर्जे त्वेत्युद्गुद्वास्योदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्यां चोपकनि-ष्ठकाभ्यां चोभयतः प्रतिगृह्योर्ध्वाग्रे महे क्षत्त्रऽस्ये भ्रत्यस्यति । स-वितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभि-रित्याज्यसंस्कारः सर्वत्र । नासंस्कृतेन जुहुयात् स्रुवे चापः स-वितुर्व इति ताः प्रणीताः प्रोक्षणीश्च ॥ ८ ॥

स्रुवः पात्रमर्थलक्षणग्रहणम् । सव्येन कुशानादाय दक्षि-णेन मूले स्रुवं विष्णोर्हस्तोऽसीति स्रुवेणाज्याहुतीर्जुहोत्युत्तरप-श्चार्द्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति, त्वमग्ने प्रमतिरिति दक्षिणपश्चार्द्धादग्नेरारभ्याविच्छिन्नमुत्तरतो जुहोति यस्येमे हिम-वन्त इत्याग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणं मध्येऽन्याहुतयोऽग्नि-र्जनिता स मेऽमूं जायां ददातु स्वाहा, सोमो जनिमान्स माऽमुया जनिमन्तं करोतु स्वाहा, पूषा ज्ञातिमान्स माऽमुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहेति । नाज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च नित्याहुतिषु चेति माण्डूकेया महाव्याहृतिसर्वप्रायश्चित्त-प्राजापत्यान्तरमेतदावापस्थानमाज्ये हविषि सव्ये पाणौ ये कुशा-स्तान् दक्षिणेनाग्रे संगृह्य मूले,सव्येन तेषामग्रं स्रुवे समनक्ति म-ध्यमाज्यस्थाल्यां मूले चाथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्यां तानभ्युत्याग्नेर्वासोऽसीति तिस्रः समिधोऽभ्या-धाय यथोक्तं पर्युक्षणमनाम्नातमन्त्रास्वादिष्टदेवतास्वमुष्यै स्वाहा-ऽमुष्यै स्वाहेति जुहुयात् स्वाहाकारेण शुद्धेन व्याख्यातः प्रतिश्रुते होमकल्पः ॥ ९ ॥

प्रकृतिर्भूतिकर्मणां सर्वासां चाज्याहुतीनां आत्पशूनां चरु-पाकयज्ञानां च । त एते अप्राजा अननुयाजा अनिळा अनिगदा

वधौ- पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां प्रहाज्य हुतिभिश्च
स्रा जुहोति समस्ताभिश्चतुर्थी मनि येतैतस्यां चोदनायामेवमना-
देशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् ॥१२॥

सम्राज्ञी श्वसुरे भवेति पिता भ्राता वास्याग्रेण मूर्द्धनि
जुहोति स्रुवेण वा तिष्ठन्त्यासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखो, गृ-
भ्णामि ते सौभगत्वाय हस्तमिति दक्षिणेन पाणिना दक्षिणं पा-
णिं गृह्णाति साङ्गुष्ठमुत्तानेनोत्तानं तिष्ठन्त्यासीनायाः प्राङ्मुख्याः
प्रत्यङ्मुखः पश्च चोत्तरा जपेदमो, अमोहमस्मि सा त्वं सा त्वमस्य-
ऽमोहं, द्यौरहं पृथिवी त्वमृक्त्वमसि सामाहं सा मामनुव्रता भव ता-
वेह विवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु
जरदष्टय इत्युदकुम्भमवं भूर्भुवः स्वरिति पूरयित्वा पुन्नाम्नो वृक्ष-
स्य सक्षीरान्त्सपलाशान्त्सकुशानोप्य हिरण्यमिति चैके, तं ब्रह्म-
चारिणे वाग्यताय प्रदाय सागुदीच्यां दिशि ता स्थेयाः प्रदक्षिणा
मग्निं पर्याणीय चोत्तरत उपस्थाप्ये हि सूनरीष्युत्थाप्या एह्यश्मानमा-
तिष्ठाश्मेव त्वं स्थिरा भव अभितिष्ठ पृतन्यतः सहस्व पृतनायत इ-
ति दक्षिणेन प्रपदेनाश्मानमाक्रमय्य प्रदक्षिणमग्निं पर्याणीय तेनैव
मन्त्रेण द्वितीये वसनं प्रदाय स लाजाञ्छमीपलाशमिश्रान् पिता भ्रा
ता वास्याञ्जलावावपत्युपस्तरणाभिघारणं प्रत्यभिघारणं चाज्येन
ताञ्जुहोति ॥ १३ ॥

इयन्नार्युपब्रूते लाजानावपन्तिका । शिवा ज्ञातिभ्यो भूयासं
चिरं जीवतु मे पतिः स्वाहेति तिष्ठन्ती जुहोति । पतिर्मन्त्रं जपत्य-
ऽश्मक्रमणाद्येवं द्वितीयमेवं तृतीयं तूष्णीं कामेन चतुर्थं प्रागुदीच्यां
दिशि सप्तपदानि प्रक्रमयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिप-
दी मायोभव्याय चतुष्पदी पशुभ्यः पञ्चपदी ऋतुभ्यः षट्पदी सखा
सप्तपदी भवेति । तान्यद्भिः शमयत्यापोहिष्ठीयाभिस्तिसृभिः स्थे-

करोऽम्यसौ स्वाहेति वा प्रथमया महाव्याहृत्या प्रथमोपहिता द्वितीयया द्वितीया तृतीयया तृतीया समस्ताभिश्चतुर्थी घोरचक्षुरित्याज्यलेपेन चक्षुषी विमृजीत, कयानश्चित्र इति तिसृभिः केशान्तानभिमृश्यैतस्यादित्याभिपजेतिचतस्रोऽनुदुत्यान्ते स्वाहाकारेण मूर्द्धनि संस्रावमत्र हैके कुमारमुत्सङ्गमानयन्त्युभयतः सुजात मा ते योनिमित्येतयाऽपि वा तूर्ष्णी तस्याऽञ्जलौ फलानि दत्त्वा पुण्याहं वाचयति पुंसवतीह भवतीहैवस्तामिति सूक्तशेषेण गृहान् प्रपादयन्ति ॥ १६ ॥

दधिक्राव्णोअकारिषमिति दधि संपिबेयातां वा यतावासी-प्रातारमध्रुवदर्शनादस्तमिते ध्रुवं दर्शयति ध्रुवैधि पोष्यामयीति, ध्रुवं पश्यामि प्रजां विदेयेति ब्रूयात् त्रिरात्रं ब्रह्मचर्यं चरेयातामधः शायीयातां दध्योदनं संभुञ्जीयातां पिबतं च तृष्णुतं चेति तृचेन सायं प्रातर्वैवाहमग्निं परिचरेयातामग्नये स्वाहाऽग्नये स्विष्टकृते स्वाहेति. पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्चाग्निश्च पुमांसं वर्तता मयि स्वाहेति पूर्वा गर्भकामा दशरात्रमविमवासः॥१७॥

अथ चतुर्थीकर्म । त्रिरात्रे निर्वृत्ते स्थालीपाकस्य जुहोति, अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या पतिघ्नी तनूस्तामस्या अपजहि। वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपुत्रिया तनूस्तामस्या अपजहि । सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपशव्या तनूस्तामस्या अपजहि । अर्यमणं नु देवं कन्या अग्निमयक्षत सेमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः । वरुणं नु देवं कन्या अग्निमयक्षत सेमां देवो वरुणः प्रेतो मुञ्चातुमामुतः । पूषणं नु देवं कन्या अग्निमयक्षत सेमां देवो पूषा प्रेतो मुञ्चातु मामुतः। प्रजायन इति सप्तमी, सौविष्टकृत्यष्टमी ॥ १८ ॥

अश्वगन्धाप्रमूलं पेषयित्वर्तुवेलायां, सुदीर्घाभिः पतिव्रतीति द्वाभ्यामन्ते स्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् । गन्धर्वस्य विश्वावसोर्मुखमसीत्युपस्थम् अञ्जनमिष्यमाणोऽभिमृशेत् । समाप्ते अर्थे जपेत् । प्राणे तवे रेतो दधाम्यसाविति अनुप्राण्याद । यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रे गर्भिणी वायुर्यथा दिशां गर्भ एवं गर्भं दधामि तेऽसाविति वा । आ ते योनिं गर्भं एतु पुमान् बाण इवेषुधिम् आवीरो अत्र जायतां पुत्रस्ते दशमास्यः । पुमांसं पुत्रं जनयतं पुमाननुजायतां तेषां माता भविष्यसि जातानां जनयासि च पुंसि वै पुरुषे रेतस्तत्स्त्रियामनूंपि च तु तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् । प्रजापतिर्व्यदधात् सविता व्यकल्पयद् । स्त्रीपूयमन्यात् स्वादधत्पुमांसमादधादिह । यानि भद्राणि बीजानि पुरुषा जनयन्ति नः तेभिष्टं पुत्रं जनय सुमसूर्द्धेनुका भव । अभिक्रन्द वीलय स्वगर्भमाधेहि साधय इपाण इपयाधेहि प्रजायै त्वा हुवामहे । यस्य योनिं पतिरेतोगृभाय पुमान् पुत्रो धीयतां गर्भे अन्तः तं पितृहि दशमास्योन्तरुदर स जायताम् । श्रेष्ठतमस्यानामिति वा ॥ १९ ॥

तृतीये मासि पुंसवनं पुष्येण श्रवणेन वा सोमांशुं पेषयित्वा कुशकण्टकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्य वाऽग्निष्टां मंस्थिते वा यज्ञे जुन्हः संस्थामग्निना स्वयं तमस्तुरीयं सभिद्धाग्निर्वनर्यिषशङ्कस्य इति चतसृभिरन्त्ये स्वाहाकारान्तैर्नस्तो दक्षिणतो निषिञ्चेत् ॥ २० ॥

चतुर्थे मासि गर्भरक्षणम् । ब्रह्मणाग्निः संविदान इति षट् स्थालीपाकस्य हुत्वाऽक्षीभ्यां ते नासिकाभ्यामिति मस्तूचमाज्यशेषेणाङ्गान्यनुविमृज्य ॥ २१ ॥

सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् । स्नातामहतवाससं

पश्च दर्भेष्वोदपात्रानारभ्यायां महाव्याहृतिभिर्हुत्वा स्थालीपाकं श्रपयित्वा मुद्गौदनमित्येके पुत्रद्रुपकरणानि स्युर्नक्षत्रं च धाता ददातु दाशुषे प्राचीं जीवातुमक्षितिं वयं देवस्य धीमहि सुमतिं सत्यधर्मणः धाता प्रजाया उत्तराय ईशे धातेदं विश्वं भुवनं जजान धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोतेति नेजेमेष परापतेति तिस्रः प्रजापत इति षष्ठी त्रिः श्वेतया शलल्या दर्भसूच्या सोदुम्बरशलाटुभिः सह मध्ये दूर्ध्वं सीमन्तमुन्नयति भूर्भुवः स्वरित्युत्सङ्गे निधाय त्रिवृतिः प्रतिमुच्य कण्ठे बध्नात्ययमूर्जावतो वृक्ष ऊर्जीव फलिनी भवेत्यथाह वीणागाथिनौ राजानं संगायनेति यो वान्यो वीरतर इत्युदपात्रेऽक्षमानवनिनीय विष्णुर्योनिं कल्पयतु एकामहामति पड्कणेन पाययेदथास्या उदरमभिमृशेत सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुः छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूः सोदमानीं गापयेन्महादेहमतीं वा ऋषभो दक्षिणा ॥ २२ ॥

काकातन्या मचकचातन्याः कोशातक्या बृहत्याः काल्कीतकस्येति सूत्राणि तेषांयस्तोपक्लेपयेद्देशं यस्मिन् प्रजायेत रक्षसामपहत्यै ॥ २३ ॥

अथ जातकर्म । जातं कुमारं त्रिरभ्य वान्यानुप्राण्याहचा मार्ष्टि यजुषा समार्ष्टि माम्नोदनं हीति । सर्पिर्मधुनी दध्युदके च सन्निनीय व्रीहियवौ वा संनिघृष्य त्रिः प्राशयेज्जातरूपेण प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना आयुष्मान् गुपितोम देवताभिः शतं जीव शरदो लोके अस्मिन्नित्यसावितिनामास्य दधाति घोषवदाद्यन्तरन्तःस्थं द्व्यक्षरं चतुरक्षरं वाऽपि वा षळक्षरं कृतं कुर्यान्न तद्धितम् । तदस्य पिता माता च विद्यातां दशम्यां व्यावहारिकं ब्राह्मणजुष्टं गोः कृष्णस्य शकृत्पिण्डानि

लोहितानि च रोमाणि सर्वं कारयित्वैतस्मिन्नेव चतुष्पथे ऽग्निनीय चतुः प्राशयेदिति माण्डूकेयो ऋग्वेदं त्वयि दधाम्यसौ स्वाहा भूर्भुवः स्वरोंवाकोवाक्यमितिहासपुराणयों सर्वान् वेदांस्त्वयि दधाम्यऽसौ स्वाहेति ॥ मेधाजननम् । दक्षिणे कर्णे जपतीति श्रुतिः । वाग्देवी मनसा संविदाना प्राणेन वत्सेन, ध्रुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा स्वः सामवेदं त्वयि दधाम्यसौ स्वाहेति प्रोक्ता ज्युपवीता सौमनसाय देवी मही मन्द्रवाणी वाणीचीः सलिला स्वयम्भूरिति चानुमन्त्रयेत शणसूत्रेण विग्रथ्य जातरूपं दक्षिणे पाणावपिनह्योत्थानादूर्ध्वं दद्यात् ब्राह्मणेभ्यो दद्याद्वा वाकुर्वीत ॥ २४ ॥

दशरात्रे चोत्थानादूर्ध्वं मातापितरौ शिरःस्नातावहतवाससौ कुमारश्चैतस्मिन्नेव सूतिकाग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि तन्मध्ये जुहुयाद्यस्मिन् जातः स्यात् पूर्वं तु दैवतं सर्वत्र आयुष्टे अद्य गीर्भिरयमग्निर्वरेण्यः आयुर्नो देहि जीवसे आयुर्दा हविषा दधानो घृतप्रतीको घृतयोनिरेधि घृतं पीत्वा मधुचारु गव्यं पितेव पुत्रमिह रक्षतादिममिति । सोम महे यणमिति दशमीस्थालीपाकस्य नामधेयं प्रकाश कृत्वा ब्राह्मणान् स्वस्ति वाच्यैवमेव मासि मासि जन्मतिथिं हुत्वोर्द्धं संवत्सराद् प्रोऽग्नौ जुहोति ॥ २५ ॥

अग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशिरसे रुद्रायार्द्राभ्योऽदितये पुनर्वसुभ्यां बृहस्पतये पुष्याय सर्पेभ्यो श्लेषाभ्यः पितृभ्यो मघाभ्यो भगाय फाल्गुनीभ्यामर्यम्णे फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे स्वातये इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानुराधाय इन्द्राय ज्येष्ठायै निर्ऋत्यै मूलायाऽऽप्येभ्योऽषाढाभ्यो ब्राह्मणेऽभिजिते विष्णवे श्रवणाय वसुभ्यो धनिष्ठाभ्यो वरुणाय शतभिषजेऽजायैकपदे प्रोष्ठपदाभ्योऽहिर्बु-

ध्न्याय प्रोष्ठपदाभ्यः पूष्णे रेवत्या अश्विभ्यामश्विनीभ्यां यमाय भरणीभ्यः ॥ २६ ॥

षष्ठे मास्यन्नप्राशनम् । आजमन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो मात्स्यं जवनकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत् । अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे यच्चिद्धि महाँश्चित् । इममग्न आयुषे वर्चसे तिग्ममोजो वरुणसोमराजन् मातेवास्मा अदितिः शर्म यंसद्विश्वेदेवा जरदष्टिर्यथा सदिति हुत्वाऽग्न आयूंषीत्यभिमन्त्र्योदगग्रेषु केशेषु, स्योना पृथिवि भवेत्युपवेश्य, महाव्याहृतिभिः प्राशनं शेषं माता प्राश्नीयात् ॥ २७ ॥

संवत्सरे चूडाकर्म तृतीये वा वर्षे, पञ्चमे क्षत्रियस्य, सप्तमे वैश्यस्याग्निमुपसमाधाय व्रीहियवानां तिलमाषाणामिति पात्राणि च पूरयित्वानडुहं च गोमयं कुशाभिर्च च केशप्रतिग्रहणाद्दशनवनीतं लोहक्षुरं चोत्तरत उपस्थाप्य संपृच्यध्वम् ऋतावरीरूर्मिणा मधुमत्तमाः पृञ्चती मधुना पयो मन्द्रा धनस्य सातय इत्युष्णाःस्वप्सु शीता आसिञ्चति । आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानाम् त्र्यायुषं तत्ते करोमि त्र्यायुषायेत्यसाविति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति शल्ल्यैके विजटान् वा कृत्वा नवनीतेनाभ्यज्य ओषधे त्रायस्वैनमिति कुशतरुणमन्तर्दधाति केशान् कुशतरुणं चादर्शेन संस्पृश्य, तेजोऽसि स्वधितिष्टेपिता मैनं हिंसीरिति लोहक्षुरमादत्ते । येनावपत् सविता श्मश्रूणि क्षुरेण राज्ञो वरुणस्य विद्वान् येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः तेन ब्रह्माणो वपतेदमस्यायुष्मान् दीर्घायुरयमस्तु वीरोऽसाविति केशाग्राणि छिनत्ति कुशतरुणं चैवं द्वितीयमेवं तृतीयमेवं

द्विचरतो निकृन्तयोः षष्ठे सप्तमे गोदानकर्मण्येतदेव गोदानकर्म पन्नूदाकर्म षोडशे वर्षेऽष्टादशे वा तृतीये तु मन्त्रपने गां ददात्यहतं च वासस्तूष्णीमावृतः कन्यानां प्रागुदीच्यां दिशि बहौषधिके देशेऽपां वा समीपे केशान्निखनन्ति आपितनाय धान्यपात्राणि नापिताय धान्यपात्राणि ॥ २८ ॥ इति प्रथमोऽध्यायः ॥

ॐ गर्भाष्टमेषु ब्राह्मणमुपनयेतैणेयेनाजिनेन गर्भदशमेषु वा गर्भैकादशेषु क्षत्रियं रौरवेण गर्भद्वादशेषु वैश्यं गव्येनाषोडशाद् वर्षाद् ब्राह्मणस्यानतीतः काल आद्वाविंशात् क्षत्रियस्यात ऊर्द्ध्वं पतितसावित्रीका भवन्ति । नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुरहतेन वा सर्वान्मेखलिनो मौञ्जी मेखला ब्राह्मणस्य धनुर्ज्या क्षत्रियस्योर्णासूत्री वैश्यस्य, पालाशो बैल्वो वा दण्डो ब्राह्मणस्य नैयग्रोधः क्षत्रियस्यौदुम्बरो वैश्यस्य, घ्राणसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य केशसंमितो वैश्यस्य । सर्वे वा सर्वेषाम् । येनावद्धेनोपनयेत्तदाचार्याधीनं तत्परिधाप्योपनेयस्याप्लुत्यालङ्कृत्य जघनेनाग्निं तिष्ठतः प्राङ्मुख आचार्यास्तप्रक्रियन्त्युपनयम् ॥ १ ॥

इयं दुरुक्तात् परिबाधमाना वर्णं पवित्रं पुनती न आगात् प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयमिति त्रिर्वेष्टन्नं प्रदक्षिणं त्रिः परिवेष्ट्य ग्रन्थिरेकस्त्रयोऽपि वाऽपि वा पञ्च यज्ञोपवीतं कृत्वा यज्ञोपवीतमसि यज्ञस्य त्वेनोपनह्यामीत्यञ्जलौ पूरयित्वा ऐनमाह को नामासीत्यसावहं भो इतीतरः समानाऽऽर्षेय इत्याचार्यः समानार्षेयोऽहं भो इतीतरो ब्रह्मचारी भवान् ब्रूहीति ब्रह्मचार्यहं भो इतीतरो भूर्भुवःस्वरित्यस्याञ्जलावञ्जलीन् आसिच्य दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपेत् देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयाम्य-

ऽमावेति गणानां त्वेति गणकामानागन्तामारिषण्यतेतियोधान्महाव्याहृतिभिव्याधिताम् ॥ २ ॥

भगस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत् पूषा ते हस्तमग्रभीदर्यमा हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाग्निराचार्यस्तव असावहं चोभावग्न एतं ते ब्रह्मचारिणं परिददामीन्द्रैतत्ते ब्रह्मचारिणं परिददामि विश्वेदेवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां वेदानामाधिपत्याय सुश्लोक्याय स्वस्तये ऐन्द्रीमावृतमावर्त आदित्यस्यावृतमन्वावर्त इति दक्षिणं बाहुमन्वावृत्य दक्षिणेन प्रादेशेन दक्षिणमंसमन्ववहृत्यारिष्यतस्ते हृदयस्य प्रियो भूयासमिति हृदयदेशमभिमृशति तूर्ष्णीं ममभ्यं पर्यावृत्याथास्योर्द्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति ॥ ३ ॥

मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति कामस्य ब्रह्मचर्यस्यासाविति तेनैव मन्त्रेण तथैव पर्यावृत्य दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य जपति ब्रह्मचार्यसि समिधमाधेयपोशानकर्मकुरुमादिवा वाचं यच्छासमिदाधानादेषा ते अग्ने समिदित्यभ्यादधाति समिधं तूर्ष्णीं वा ॥ ४ ॥

संवत्सरे सावित्रीमन्वाह त्रिरात्रे अन्वक्षं वा गायत्रीं ब्राह्मणायानुब्रूयात् त्रिष्टुभं क्षत्रियाय जगतीं वैश्याय सावित्रीं स्वेत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः । अधीहि भो३ इत्युक्त्वाचार्य ॐकारं मयुज्यायेनर वाचयति सावित्रीं भो अनुब्रूहीत्यथास्मै मन्वाह तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्द्धर्चशोनवानम् ॥ ५ ॥

आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाऽजरा नाम

स्योऽपरा नामस्याऽमृता नामस्य तासां वोऽशीय सुमतौ मायत्तेस्येव विरप आचमन्य स्तरिन नो मिमीतामिति पञ्चर्चेन दण्डं प्रयच्छति वरो दक्षिणा मदक्षिणमभिन पर्यास्थीत्य भिक्षते ग्रामं मातरं देव मपमां वा चैनं न प्रत्याचक्षीताचार्याय भैक्ष्यं निवेदयित्वाऽनुज्ञातो गुरुणा भुञ्जीताहरहः समिदाधानं भिक्षाचरणमधः शय्यां गुरुशु- श्रूषेति ब्रह्मचारिणो नित्यानि ॥ ६ ॥

अथानुवाचनस्याग्नेरुत्तरत उपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरोऽभिवाद्य पादावाचार्यस्य दक्षिणेन जानुनाक्रम्य भूमे कुशतरुणान् दक्षिणोत्तराभ्यां पाणिभ्यां मध्ये परिगृह्य तां सव्येनाचार्योऽस्य संगृह्य दक्षिणेनाद्भिः परिषिञ्चयेतरं वाचयति सावित्रीं भो ३ अनुब्रूहीतीतरः सावित्रीं ते अनुब्रवीमीत्याचार्यो गायत्रीं भो ३ अनुब्रूहीतीतरो गायत्रीं ते अनुब्रवीमीत्याचार्यो वैश्वामित्रीं भो३ अनुब्रूहीतीतरो वैश्वामित्रीं ते अनुब्रवीमीत्याचा- र्यो ऋषीं भो ३ अनुब्रूहीतीतर ऋषींस्ते अनुब्रवीमीत्याचार्यो देव- ता भो ३ अनुब्रूहीतीतरो देवतास्ते अनुब्रवीमीत्याचार्यः श्रुतिं भो३ अनुब्रूहीतीतरः श्रुतिं ते अनुब्रवीमीत्याचार्यः श्रद्धामेधे भो ३ अनुब्रूहीतीतरः श्रद्धामेधे अनुब्रवीमीत्याचार्य एवमेवमृग्वेदस्य यस्य यो यो मन्त्रो यद्देवत्यो यच्छन्दाश्च तथा तं तं मन्त्रमनुब्रू- याद्यपि वा विद्वन्नृषिदैवतच्छन्दांसि तत्सवितुर्वरेण्यमित्येतां पच्छोऽ- र्धर्चशो नवानामित्यपेति समास अथाचार्य एवमेकैकमृचमनुवाकं वाऽनुब्रूयात् सूक्तमृक्सूक्तमनुवाकं यावद्वा गुरुर्मन्येत यो तमेकायं सूक्तं वाऽनुब्रूयादथानुवाकस्य पर्यन्ता सूक्तां दाक्षिण्या मधुरिंगनि कामं सूक्तादाचार्य इत्येवरांपत्नाग्न्याये क्षाराश्यानं कुशतरुणानादाया- ऽऽनडुहेन भूमे कुण्डं कृत्वा यथासूक्तं कुशोम्पयो निषिञ्चयेदहःशेषं स्थानमुपचारयश्च ॥ ७ ॥

अपराह्णेऽस्नतधाना भिक्षित्वाऽऽज्याहुतिधर्मेणाग्नौ पाणिना जुहुयात् सदसस्पतिमद्भुतमिति प्रत्यृचः सूक्तशेषेण भक्षैराचार्य स्वस्तिवाच्य ॥ ८ ॥

अरण्ये समित्पाणिः सन्ध्यामास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदेशमा नक्षत्राणां दर्शनादतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वैवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ॥ ९ ॥

उदिते माध्ययनमहरहः सायं प्रातरग्निमुपसमाधाय परिसमूह्य पर्युक्ष्य दक्षिणं जान्वाच्याग्नये समिधमाहार्षं बृहते जातवेदसे स मे श्रद्धां च मेधां च जातवेदाः प्रयच्छतु स्वाहा । एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा । समिद्धो मां समर्द्धय प्रजया च धनेन च स्वाहा । एषा ते अग्ने समित्तया वर्द्धस्व चाच्प्यायस्व वर्द्धिषीमहि च वयमाचप्यासिषीमहि स्वाहेत्यथ पर्युक्ष्याग्निं श्रद्धां च मेधां चाविनिपातं स्मृतिं च मे ईक्षितो जातवेदा अयं शुनम्नः संप्रयच्छत्वित्यग्निमुपतिष्ठते । सौपर्णव्रतभावितं दृष्टदृष्टसम्प्रदायानुष्ठितं त्र्यायुषं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे वामे च ततः पृष्ठे च पञ्चसु भस्मना त्रिपुण्ड्रं करोति स एतेषां वेदानामेकं द्वौ त्रीन् सर्वान् वाऽधीते य एवं हुत्वाग्निमुपतिष्ठते ॥ १० ॥

अथ व्रतादेशनम् । तस्योपनयनेन कल्पो व्याख्यातो न सावित्रीमन्वाह । दण्डप्रदानान्तमित्येके । उदगयने शुक्लपक्षेऽहोरात्रं ब्रह्मचर्यमुपेत्याचार्योऽमांसाशी ब्रह्मचारी चतुर्दशीं परिहाप्याष्टमीं चाद्योत्तमे चैके यां वान्यां प्रशस्तां मन्येत तस्यां शुक्रिये ब्रह्मचर्यमादिशेत् त्रिरात्रं ब्रह्मचर्यं चरेद् द्वादशरात्रं संवत्सरं वा यावद्वा गुरुर्मन्येत शाकरं तु संवत्सरं व्रातिकमौपनिषदं च पूर्णे काले

चरिते ब्रह्मचर्ये संपोर्बार्हस्पत्यान्ते वेदेऽनूक्ते रहस्यं श्रावयिष्यन् कालनियमं चादेशेन प्रतीयेत ॥ ११ ॥

कृतमातराबाहस्यापराह्णेऽपराजितायां दिशि हुत्वाचार्योऽथैनं यास्वेव देवतासु परीतो भवति तास्वेवैनं पृच्छत्यग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यमिति चरितं भो ३ इति प्रत्युक्ते पश्चादग्ने पुरस्तादाचार्यस्य प्राङ्मुखे स्थितेऽहतेन वाससाचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्योपरिष्टाद्ग्रन्थिं कृत्वा यथा न संभ्रश्येत त्रिरात्रं समिदाधानं भिक्षाचरणमधः शय्यां गुरुशुश्रूषां चाकुर्वाणस्तोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे वोपवसत्वेत्यत्र हैके यानेव नियमाँस्तिष्ठतो राज्यामेनोपदिशन्त्याचार्योऽमांसाशी ब्रह्मचारी त्रिरात्रे तिष्ठेद्राज्या वा ग्रामान्निष्क्रामन्नेतानीक्षेतानध्यायान् पिशितायं चण्डालं सूतिकां रजस्वलां तेदनिपवहस्तकाँश्छवशानं सर्वाणि च ब्रह्मरूपाणि यान्यास्येन प्रविशेयुः स्वस्यवास्तं निरसनुदित आदित्येऽनुव्राजनधर्मेण वाग्यतायोष्णीषिणेऽन्याह महानाम्नीष्वेवैष नियमोऽथोत्तरेषु प्रकरणेषु स्वाध्यायमेव कुर्वत आचार्यस्येतरः शृणोत्युष्णीषभाजं दक्षिणा गां ददाति स्वस्तमित्युपादिदीति च प्रणवेन वा सर्वमर्हके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु यथापरीतमिति माण्डूकेयः ॥ १२ ॥

अथातो दण्डनियमानान्तरा गमनं कुर्यादात्मनो दण्डस्य चाप चेद्दण्डमेखलोपवीतानामन्यतमद्दीर्येत छिद्येत वा तस्य तत्प्रायश्चित्तं यदुद्गाह रयस्य मेखलाचेदसन्धेया भवत्यन्यां कृत्वानुमन्त्रयेत ।

मेध्यामेध्यविभागज्ञे मयि देवि सरस्वति ।

मेखले स्कन्नमाच्छिन्नं सन्तनुष्व व्रतं मम ॥ त्वयो ब्रह्मभृच्छुचिरग्ने देवीं इहावह । उपयाम् हविश्च नः व्रतानि बिभ्रद् व्रतपा

अदाभ्यो भरानो दूतो अजरः सुवीरः दधद्रत्नानि सुमृडीको अग्ने गोपाय नो जातवेदस उपवीतं च दण्डे बध्नाति । तदप्येतत् ।

यज्ञोपवीतदण्डं च मेखलामाजिनं तथा ।

जुहुयादप्सु भग्ने पूर्णे वारुणर्चा रसेन वा ॥ ॥ १३ ॥

अथ वैश्वदेवो व्याख्यातो होमकल्पो वैश्वदेवस्य सिद्धस्य सायं प्रातर्गृह्येऽग्नौ जुहुयादग्नये स्वाहा सोमाय स्वाहेन्द्राग्निभ्यां स्वाहा विश्वकर्मणे स्वाहा भरद्वाजधन्वन्तरये स्वाहादितये स्वाहाऽनुमतये स्वाहाग्नये स्विष्टकृते स्वाहेति हुत्वैतासां देवतानामथ वास्तुमध्ये बलिं हरेदेताभ्यश्चैव देवताभ्यो नमो ब्रह्मणे ब्राह्मणेभ्यश्च वास्तोष्पते मतिज नीहास्मानिति वास्तुमध्ये वास्तोष्पतये चाथ दिशां प्रदक्षिणं यथाक्रमं बलिं हरति नम इन्द्रायेन्द्रेभ्यश्च नमो यमाय याम्येभ्यश्च नमो वरुणाय वारुणेभ्यश्च नमः सोमाय सौम्येभ्यश्च नमो बृहस्पतये बार्हस्पत्येभ्यश्चाथाऽऽदित्यमण्डले नमोऽदितय आदित्येभ्यश्च नमो नक्षत्रेभ्य ऋतुभ्यो मासेभ्योऽर्द्धमासेभ्योऽहोरात्रेभ्यः संवत्सरेभ्यः पूष्णे पथिकृते धात्रे महद्भ्यश्चेति देहलीषु विष्णवे द्वारि वनस्पतय इत्युलूखले ओषधीभ्य इत्योषधीनां स्थाने पर्जन्य याज्य इति मणिके नमः श्रियै शय्यायां शिरसि पादतो भद्रकाल्या अनुगुप्ते देशे नमः सर्वान्नभूतये ऽन्तरिक्षे नक्तञ्चरेभ्य इति सायमहश्चरेभ्य इति प्रातर्ये देवास इति चाविज्ञाताभ्यो देवताभ्य उत्तरतो धनपतये च प्राचीनावीती दक्षिणतः शर्वामिनयति ये अग्निदग्धा इति देवपितृनरेभ्यो दत्वा श्रोत्रियं भोजयेद्ब्रह्मचारिणे भिक्षां दद्यादनन्तरं सौवासिनीं गर्भिणीं कुमारान् स्थविरांश्च भोजयेच्छुभ्यः श्वपचेभ्यश्च वयोभ्यश्चावपेद् भूमाविति नानवमर्शनाचैको न पूर्व मोघमन्नं निन्दते अप्रचेता इति ॥ १४ ॥

एषणां चेदग्नीषोमीयमन्यतम आगन्तुभ्योऽपशुपत्नं वा यत् सामान्यतमं मन्येत तत्कुर्यादामांसोऽर्घः स्यादिति पशुमभिजिघ्रेदं कुरु-तेत्येवं सूर्यादेवाय प्राजापत्यो वाह ऐन्द्रः मित्राय मैत्रः स्वागका-वैन्द्राग्नो यद्यप्यसकृत् संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इत्यपि भवति ॥ १५ ॥

मधुपर्के च सोमे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
आचार्य्यश्च पिता चोभौ सखा चानतिथिर्गृहे ।
ते यद्विदध्युस्तत् कुर्यादिति धर्मो विधीयते ॥
नैकग्रामीणमतिथिं विप्रोऽप्यागतमेव च ।
उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपि वा ॥
अग्निहोत्रं बलीवर्दाः काले चातिथिरागतः ।
बालाश्च कुलवृद्धाश्च निर्दहन्त्यपमानिताः ॥
अनड्वानग्निहोत्रं च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥
देवताः पुरुषं दृष्ट्वा अहरहर्गृहमेधिनम् ।
भागधेयमुपमर्पन्ति तान्यो निर्वप्तुमर्हति ॥ ॥ १६ ॥
तृणान्यप्युञ्छतो नित्यमग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥
उदपात्रान्तु दातव्यमाकाशान्मुहूर्त्तादपि ।
आसूक्तादानुवाकाद्वा ब्रह्मयज्ञोऽभिधीयते ॥
नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतम् ।
पुत्रो भ्राताऽथवा पत्नी शिष्यो वाऽस्य बलिं हरेत् ॥
वैश्वदेवमिमं ये तु सायं प्रातः प्रकुर्वते ।
ते अर्थैरायुषा कीर्त्या प्रजाभिश्च समृध्युरिति ॥ ॥ १७ ॥

ब्रह्मचारी भवत्यथाचार्य्यमामन्त्रयते प्राणापानयोरित्युपांश्वोमहं वत्स्यामि भो ३ इत्युच्चैः प्राणापाना उरुव्यचास्त्वया प्रपद्ये देवाय त्वा गोप्त्रे परिददामि देवसवितरेष ते ब्रह्मचारी परिददामि ते गोपायस्व तं मामृषस्वेत्युपांश्वों स्वस्तीत्युच्चैराचार्य्यः स्वस्तीत्युच्चैराचार्य्यः ॥ १८ ॥ ॥ इति गृह्यसूत्रे द्वितीयोऽध्यायः ॥२॥

स्नानं समावर्त्त्यमानस्यानडुहमित्युक्तम् । तस्मिन्नुपवेश्य केशश्मश्रूणि वापयति लोमनखानि च व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पीभिरित्युद्वाप्यापोहिष्ठीयेनाभिषिच्यालंकृत्य युवं वस्त्राणीति वाससी परिधापयाऽस्मै निष्कं बध्नात्यायुष्यं वर्चस्यं ममाग्ने वर्च इति वेष्टनं एहं एहमहनेति च्छत्त्रमारोहतेत्युपानहौ दीर्घस्ते अस्त्वकुश इति वैण्वं दण्डमादत्ते । प्रतिजीनस्तदहरासीत वनस्पते वीड्वङ्गः वास इत्येति रथमारोहयेद्यद्येनं गवा वा पशुना वा अर्हयेयुस्तत्पूर्वमुपतिष्ठेत गोभ्यो वा समावर्त्तेत फलवतो वा वृक्षादिन्द्र श्रेष्ठानि द्रविणानि धेहि स्योना पृथिवी भवेत्युवेशाहलीत्यतमश्नं तदहर्भुञ्जीताचार्याय वस्त्रयुगं दद्यादुष्णीषमणिकुण्डलं दण्डोपानहं छत्रं च ॥ १ ॥

अगारं कारयिष्यन्निहाप्रेष्याय विशः परिगृह्णामीत्युदुम्बरशाखया त्रिः परिलिख्य मध्ये स्थण्डिले जुहोति कोऽसि कस्याऽसि कायते ग्रामकामो जुहोमि स्वाहा । अस्यां देवानामसि भागधेयमितः प्रजाताः पितरः परेताः । विराड्वज्जुहद्ग्रामकामो न देवानां किञ्चनान्तरेण स्वाहेति स्थूणागर्त्तान् खादयित्वोदपन्यानासिच्य इमं विमिन्वे अमृतस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् । एनां शिशुः क्रन्दत्वाकुमार एनां धेनुः क्रन्दतु नित्यवत्सेत्युदुम्बरशाखां घृतेनाक्तां दक्षिणे द्वार्य्ये गर्त्ते निदधाति । इमामुच्छ्रयामि भुवनस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् । एनां शिशुः

क्रन्दनाकुमार एनां धेनुः क्रन्दतु वाकवत्सेत्युत्तरत एवं द्वयोर्द्वयो-र्दक्षिणतः पश्चादुत्तरतश्च इषापद्मरस ह्रस्वस्य शाखां घृतमुत्तरतोभ्य-मयो विनोतथे । एनां शिशुः क्रन्दनाकुमार आस्यन्दन्तान्धेनवो नित्यवत्सा इति स्थूणाराजमुच्छ्रयत्येनं कुमारस्तरुण आवत्सो मु-वत्सारि एवं परिस्रुतः कुम्भा आदध्नः कलशैरुपमन् ॥ २ ॥

१ इहैव स्थूणे प्रतितिष्ठ ध्रुवाश्वावती गोमती सीलमावती कोषे तिष्ठ घृतमुक्षमाणैव तिष्ठ निमितानि तिल्वलास्याजिरावती मध्ये पोषस्य तृम्पतां मा माघमवायवः । उपहूता इह गाव उप-हूता अजावयः अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । स्थ-मो प्रतितिष्ठ वामदेव्ये श्रयस्व बृहतिस्तम्भायेति स्थूणाराजमभि-मृशति संमितस्य स्थूणाः संमृशति सत्यं च श्रद्धां चेति पूर्वे पश्-श्च दक्षिणा चेति दक्षिणे, बलं चौजश्चेत्यपरे, ब्रह्म च क्षत्रं चेत्यु-त्तरे श्रीस्तूपो धर्मस्थूणाराजोऽहोरात्रे द्वारफलके सेवतारं अपिधान-मुत्तरं समुद्रमय्यमक्षयमाप्नं स्तूपस्याधस्तान्निखनेद् ॥ ३ ॥

वास्तोष्पतीये कर्म्मण्यग्निं दधामि मनसा शिवेनायमग्नु सं-गमनो वसूनां मा नो हिंसी स्थविरं मा कुमारम । शन्नो भव द्वि-पदे शं चतुष्पद इति गृहमध्ये चासन उपसमाधाय मासप्रेषु नवेषु कुम्भेषूदकुम्भं नवं प्रतिष्ठाप्यापरिष्टा अस्माकं वीरा मा परासेचिनो पर्णमिश्याभिमन्त्र्य रथन्तरस्य स्तोत्रियेण पुनरादाय कन्कुपकारं तिसृः पूर्वाह्ने जुहोति वामदेव्यस्य मध्यन्दिने बृहतोऽपराह्ने महाव्या-हृत्यश्चतस्रो वास्तोष्पते इति तिस्रोऽश्वीवहा वास्तोष्पते वास्तोष्पते ध्रुवा स्थूणा सौविष्टकृती दद्यादी स्थापकस्य रात्रौ ज्येष्ठं पुनरपा-दाय जायां च सहभान्यः मयधेत इन्द्रस्य गृहाः शिवा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह जायया सह प्रजया सह पशुभिः सह रायस्पोषेण सह यन्मे किञ्चास्ति तेन ॥ ४ ॥

शग्मं शग्मं शिवं शिवं क्षेमाय वः शान्त्यै प्रपद्येऽभयं नो अस्तु ग्रामो मारण्याय परिददातु विश्वमहाय मा परिदेहीति ग्रामान्निष्क्राम्नरण्यं ग्रामाय परिददातु महविश्वाय मा परिदेहीति । ग्रामं प्रविशन्नरिक्तोः गृहान् भद्रान् सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् इरां वहतो घृतमुक्षमाणा अन्येष्वहं सुमनाः संविशेयमिति सदा प्रवत्स्यन्नीयः ॥ ५ ॥

अनाहिताग्निः प्रवत्स्यं गृहान् समीक्षते । इमां मे मित्रावरुणौ गृहान् गोपायतं युवौ । आविनष्टानविन्हुतान् पूषैनानभिरक्षत्वस्माकं पुनरागादपि पन्थामगन्महीति च जपति ॥ ६ ॥

अथ प्रोष्यायन् गृहान् समीक्षते गृहा मा विभीत मा वेपध्वमूर्जं बिभ्रतरामसि ऊर्ज बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः । येषामध्येति प्रवसन्येषु सौमनसो बहुः गृहानुपह्वयामहे ते नो जानन्तु जानतः । उपहूता इह गाव उपहूता अजावयः अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । अयं नो अग्निर्भगवानयं नो भगवत्तरः । अस्योपमन्ये मारिषा मायं श्रैष्ठ्ये दधातु ■ इति गृहमाग्निमुपस्थाय कल्याणीं वाचं प्रब्रूयाद्विराजो दोहोऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोह इति पाद्यं प्रतिग्रहणः ॥७॥

अनाहिताग्निर्नवं प्राशिष्यन्नाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ जुहुयात् प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति प्राशनार्थीयमभिमन्त्र्य प्रज्ञाप्तः श्रेयः समनैष्टदेवतास्त्वया वशेन समशीमहि त्वा सन्नोमयोभूः पितवाविशस्व शन्नो भव द्विपदे शं चतुष्पद इत्यद्भिरभिषिञ्चेत्त्रिः प्राश्नात्यमोसि प्राण तदृतं ब्रवीम्यमोसि सर्वाननुप्रविष्टः स मे जरां रोगमपनुद्य शरीरादमामराधिप्रमृधाम इन्द्रेति हृदयदेशमभिमृशति । नाभिरसि मा विभीथाः प्राणानां ग्रन्थिरसि मा वि-

स्थम इति नाभिं, भद्रं कर्णेभिरिति पयांसि तच्चक्षुरित्यादित्यमुप-
स्थाय ॥ ८ ॥

परिवः मैन्याद्भुमाग्राद्भन्तु धोरपिण्वः । समानस्तस्य गोप-
तेर्गावो अंशो नवोरिपन् पूषा अन्वेतु न इति गाः प्रविशमानाः
अनुमन्त्रयेत परिक्रान्तासु यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च
ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्य इत्यागावो अग्मन्निति च
सत्याग्नामूत्तमा ममाकुर्वन्मयोभुर्वात इति सूक्तेन गोष्ठे गताः ॥९॥

या फाल्गुन्या उत्तरामावास्या सा रेवत्या संपद्यते तस्यामङ्क-
लक्षणानि धारयेद् भुवनमसि सहस्रपोषपमिन्द्राय त्वाश्वो ददव्
अक्षतामिष्टामिन्नाभं गोपायनं यावतीनामिदं करिष्यामि भूयसीनामु-
त्तमां सा मा क्रियासमिति या प्रथमा प्रजायेत तस्याः पीयूषं
जुहुयात् संवत्सरीणं पय उष्णियाया इत्येताभ्यामृग्भ्यां यदि यमौ
प्रजायेत महाव्याहृतिभिर्हुत्वा यमसं दद्यात् ॥ १० ॥

अथ वृषोत्सर्गः । कार्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्य-
स्य गवां मध्ये सुसमिद्धमग्निं कृत्वाऽऽज्याहुतीर्जुहोति इह रतिरिह
रमध्वं स्वाहा इह धृतिरिह स्वधृतिः स्वाहा उपसृजं धरुणं मात्रे
धरुणो मातरं धयन् रायस्पोषमस्मासु दीधरत् स्वाहा पूषा गा अ-
न्वेतु न इति पौष्णस्य जुहोति रुद्रान् जपित्वैकवर्णं द्विवर्णं त्रिवर्णं
वा यो वा यूथं छादयते रोहितो वैव स्यात् सर्वाङ्गैरुपेतो यूथे च तेजस्वि-
तमः स्यात्तमलङ्कृत्य यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चालङ्कृत्यैतं
युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण मा नः साप्त ज-
नुषा सुभगा रायस्पोषेण समिषा मदेम स्वाहेति । मध्ये-
ऽनुमन्त्रयते मयोभूरित्यनुवाकशेषेण सर्वासां पयसि पायसं श्रप-
यित्वा ब्राह्मणान् भोजयेत ॥ ११ ॥

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका अपरपक्षेषु तासां प्रथमायां शाकं

जुहोति इयमेव सा या प्रथमा व्युच्छदन्तरस्यां चरति प्रतिष्ठा वधूर्जजान नवकृज्जनित्री त्रय एनां महिमानः सचन्ता स्वाहेत्यथ स्विष्टकृतो यस्यां वैवस्वतो यमः सर्वे देवाः समाहिताः अष्टका सर्वतोमुखी सा मे कामानतीतृपत् । आहुस्ते ग्रावाणो दन्तानुषः पवमानः मासाश्चार्द्धमासाश्च नमस्ते सुमनामुखि स्वाहेति ॥ १२ ॥

मध्यमायां मध्यावर्षे च महाव्याहृतयश्चतस्रो ये तातृपुरिति चतस्रोऽनुद्रुत्य वपां जुहुयाद्वहवपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ सुकृतस्य लोके मेदसः कुल्या उप ताः स्रवन्तु सत्याः सन्तु यजमानस्य कामाः स्वाहेति वा महाव्याहृतयश्चतस्रो ये तातृपुरिति चतस्रोऽष्टाहुतिस्थालीपाको वदानमिश्रोऽन्तर्हिता गिरयोऽन्तर्हिता पृथिवीमह दिवा दिग्भिश्च सर्वाभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा। अन्तर्हिताम ऋतवोऽहोरात्राश्च सन्धिजाः मासाश्चार्द्धमासाश्चान्वमन्तः पितुर्दधेऽमुष्यै स्वाहा । यास्तिष्ठन्ति याः स्रवन्ति यादश्चाः परिमस्तुपीः अद्भिः सर्वस्य भर्तृभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा । यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता रेतस्तन्मे पिता वृङ्क्तां मातुरन्योवपद्यतामुष्यै स्वाहेति वा महाव्याहृतीनां वा स्थाने चतस्रोऽन्यत्र करणस्य पायसो वा चरुः श्वोऽन्वष्टक्यं पिण्डपितृयज्ञावृता ॥ १३ ॥

उत्तमायामपूपाञ्जुहोत्युक्थ्यश्चाऽतिरात्रश्च सद्यःक्री छन्दसा सह अपूपकृदष्टके नमस्ते सुमनामुखि स्वाहेति । गोपशुरजस्थालीपाको वाऽपि वा गोग्रासमाहरेदपि वारण्ये कक्षमपादहेदेषा मेऽष्टकेति न त्वेव न कुर्वीत न त्वेव न कुर्वीत ॥ १४ ॥ इति गृह्यसूत्रे तृतीयोऽध्यायः ॥ ३ ॥

मासि मासि पितृभ्यो दद्याद् ब्राह्मणान् वेदविदो युग्मांस्त्र्यवराऽर्ध्यान् पितृवदुपवेश्यायुग्मान्युदपात्राणि तिलैरवकीर्यासावेतत्त

इत्यनुदिश्य ब्राह्मणानां पाणिषु निनयेदथ वर्द्धपलङ्कृतानन्नपात्रौ कृत्वाऽन्नं श्यामावेतच्च इत्यनुदिश्य भोजयेद्भुञ्जानेषु महाव्याहृतीः सावित्रीं मधुवातीयाः पितृदेवत्याः पावमानीश्च जपेद्भुञ्जानेषु पि-ण्डान् दद्यात् पुरस्तादेके पिण्डान् पाश्चेपेन तत्पात्रीणां किञ्चिदन्त-मीय ब्राह्मणेभ्यः शेषं निवेदयेदग्नौकरणादि पिण्डपितृयज्ञेन कल्पो व्याख्यातः ॥ १ ॥

अथात एकोद्दिष्टमेकपवित्रमेकार्घ्यमेकपिण्डं नावाहनं नाग्नौ-करणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्न उपतिष्ठतामि-त्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गः संवत्सरमेवं मेवे चतुर्थमित-र्थम ॥ २ ॥

अथ सपिण्डीकरणम् । संवत्सरे पूर्णे त्रिपक्षे वा यदहर्वा वृद्धि-रापद्येत चत्वार्युदपात्राणि सतिलगन्धोदकानि कृत्वा, त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेवं पिण्डमप्येतत्सपिण्डीकरणम् ॥ ३ ॥

अथात आभ्युदयिकमापूर्यमाणपक्षे पुण्याहे मातृयागं कृत्वा युग्मान् वेदविद्ब्राह्मणानुपवेश्य पूर्वाह्णे प्रदक्षिणमुपचारः पितृमन्त्र-वर्जं जपः ऋजवो दर्भा यवैस्तिलार्थो दधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान् पितॄनावाहयिष्य इत्यावाहने नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄन् वाचयिष्य इति वा-चने संपन्नमिति तृप्तिप्रश्ने समानमन्यदविरुद्धमिति ॥ ४ ॥

अथोपाकरणमोषधीनां प्रादुर्भावे हस्तेन श्रवणेन वाऽऽज्यस-क्तूनां धानानां च दधिघृतमिश्राणामपूप वेदेन जुहुयादिति हैक आहुः सूक्तानुवाकाद्याभिरिति वाऽभ्यासार्थैर्वाद्याभिरिति माण्डू-केयोऽथ ह स्माह कौषीतकिरग्निमीळे पुरोहितमित्येका कुसुम्भक-स्तदब्रवीदावदँस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामं ते

विश्वं भुवनमाविवेश जुहोमि यज्ञं मन्त्रा नो यज्ञं यज्ञियाः सुशर्मे यो न स्तोऽर्वे नः पातिवक्ष्व विवस्वान् याहि मरुत्वता यज्ञे राजं सूर्यं हविरसि दूत्वा तच्चक्षुरित्यहर्पणमिद इत्येका दुग्धेष्वाद्भिः मरुतामिति दधिक्रावृण्णो अकारिषमित्येतयाचम्योपविश्य महाव्याहृतीः सावित्री वेदादिमृचौति च स्वस्त्ययनानि च जपित्वाचार्य स्वस्तिवाच्य तद्भोजपि भवति ॥

अथातयामता पूर्जा सारत्वं छन्दसां तथा ।
इच्छन्न सदस्योऽश्यन्नुपाकर्म तपोबलात् ॥
तस्मात् यत्कर्म नित्येनात्मनो मन्त्रसिद्धये ।
उपाकर्तव्यमित्याहुः कर्मणा निर्दिश्यच्छना ॥
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं भवेत् ।
अष्टकासु त्वहोरात्रम् ऋत्वन्त्यासु च रात्रिषु ॥ ॥ ५ ॥

माघशुक्लप्रतिपद्यपराजितायां दिशि यदोपधिके देवा उदुत्यं जातवेदसं चित्रं देवानां नमो मित्रस्य सूर्योद्भोदिवस्यासिति सूर्याः णि च अचित्त्वा ग्राम इत्या वयं अमीति सदक्षिणं प्रत्यृचं प्रतिदिशं गत्वा लोमानुपूर्वीच्छन्दांसि तर्पयित्वा प्रतिपुरुषं च पितॄञ्छन्दांसि विश्रामयन्त्वर्द्धमासान्मासानर्द्धपञ्चान् माघीयी श्रोदद्दोरात्रमुपरम्य प्राध्ययनम् ॥ ६ ॥

अथोपरममुत्पातेष्वाकालमन्येष्वद्भुतेषु च विद्युत्स्तनयित्नुवर्षासु त्रिरेकमेके श्व द्वौ भोजने दशाहमथ मृतकेषु च चतुर्दशमानाम्यर्थेऽरुकासु च वामेषु नष्टेषु चाचार्योपरते दशाह श्रुत्वा त्रिरात्रं सतूर्णां च अनिष्टे श्राद्धात्नप्रश्याग्निभि मेतमनुगत्वा पितृभ्यश्च निराय पिण्डोपदर्शा संध्यां पर्वसुत्समिते शूद्रपतिकर्मे सामशब्दे श्मशाने ग्रामारण्येऽन्तःशवे ग्रामे दर्शनीयाद्यश्रवणीयादनिष्टाणोऽतिरातेऽह्ने न पाठांज रथ्यायां वीणाशब्दे च स्वस्थः

अस्तमिते स्वारोहणेऽन्याग्रोहणेऽप्युक्रन्दस्वाग्नौ नग्न उच्छिष्टे संध्ये केशानश्मश्रुवापनात्स्नानादुत्सादने स्नाने संवेशनेऽभ्यञ्जने प्रेतस्पर्शिनि सोमविक्रयिणोश्च शूद्रस्पर्शिदितपाणिः सेनायामभ्युत्थाने श्मशाने ऽपि तु वसतिक्रान्तेऽनधीयीरन्नन्ते तेषां यदि किञ्चिद्ध्यायेतानो ऽध्येयं प्राणायामत्र्याद्दित्यधीयांशस्तद्धीयीत विद्युत्स्तनयित्नुवर्षेषु कल्ये वर्षवद्दर्शपक्षेषु । तदप्येतत् ।

भक्षमाणो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायः पाण्यास्यो ब्राह्मणः स्मृत, इति ॥ ॥ ७ ॥

स्वाध्यायेनेऽध्यायस्थ गर्ज्यमाङ्गोदङ्मुखासीन आचार्यो दक्षिणत उदङ्मुख इतरो द्वौ वा भूयांसस्तु यथावकाशं नोच्चासनोपविष्टो गुरुसमीपे नैकासनस्थो न प्रसारितपादो न बाहुभ्यां जानुपरिगृह्य नोपाश्रितशरीरो नोपहतपादो न पादकुञ्चितकः कुर्यादधीहि भो ३ इत्युक्त्वाऽऽचार्य ॐकार प्रवोदयेदोमित्यितरः प्रतिपद्यते ततस्ततमधीयीताधीत्योपसंगृह्य विरताः स्म भो इत्युक्त्वा यथार्थं विहृतं विरामस्तावदित्येकेनाधीयतामन्तरा गर्दभमानार्च श्वपारिहरेदधीयानो यदि चेद्दोषः स्यात्त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीमभ्यावर्तयेद्यावच्छक्नुयाद् ब्राह्मणेभ्यः किञ्चिद् दद्यादहोरात्रमुपरम्य माध्ययनम् ॥ ८ ॥

स्नात उपस्पर्शनकालेऽवगाह्य देवतास्तर्पयति । अग्निस्तृप्यतु वायुस्तृप्यतु सूर्यस्तृप्यतु विष्णुस्तृप्यतु प्रजापतिस्तृप्यतु सहस्राक्षस्तृप्यतु । सोमः ब्रह्मा वेदाः देवाः ऋषयः सर्वाणि च छन्दांसि ॐकारः वषट्कारः महाव्याहृतयः सावित्री यज्ञाः द्यावापृथिवी नक्षत्राणि अन्तरिक्षम् अहोरात्राणि संख्याः सन्ध्याः समुद्राः नद्यः गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः नागाः वयांसि सिद्धाः साध्याः विप्राः यक्षाः रक्षांसि भूतान्येवमन्तानि तृप्यन्तु । श्रुतिं तर्पयामि स्मृतिं तर्पया-

पि धृतिं तर्पयामि श्रद्धामेधे धारणां च गोभायनं स्थावरजङ्ग-
मानि सर्वभूतानि तृप्यन्त्विति यज्ञोपवीती ॥ ९ ॥

अथ प्राचीनावीती पित्र्यां दिशमीक्षमाणः शतर्चिनः माध्यमाः गृत्समदः विश्वामित्रः जमदग्निः वामदेवः अत्रिः भरद्वाजः वसिष्ठः प्रगाथाः पावमानाः क्षुद्रसूक्तमहासूक्ताः सुमन्तुः जैमिनिवैशम्पायनपैलसूत्रभाष्यगार्ग्यबभ्रुबाभ्रव्यमण्डुमाण्डव्याः गार्गी वाचक्नवी वडवा प्रातिथेयी सुलभा मैत्रेयी कहोळं कौषीतकीं महाकौषीतकीं सुयज्ञं शांखायनम् आश्वलायनम् ऐतरेयं महैतरेयं भारद्वाजं जातूकर्ण्यं पैङ्ग्यं महापैङ्ग्यं बाष्कलं गार्ग्यं शाकल्यं माण्डूकेयं महादमत्रम् औदवाहिं महौदवाहिं सौजामिं शौनकिं शाकपूणिं गौतमीं ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति प्रतिपुरुषं पितरः पितृवंशास्तृप्यतु मातृवंशास्तृप्यतु ॥ १० ॥

न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनादादित्यं संधिवेलयोरनात्मकार्यकारिणं प्रेतस्पर्शिनं पतितोदक्याभ्यां न संवदेत्तैश्चोद्धृततेजांसि न भुञ्जीत न पातयामैः कार्यं कुर्यान्न सह भुञ्जीत न शेषं पितृदेवतातिथिभृत्यानां शेषं भुञ्जीतोञ्छशिलमयाचितप्रतिग्रहः साधुभ्यो याचितो वा याजनं शंसः पूर्वं पूर्वं गरीयो संसिद्धमानायां वैश्यवृत्तिर्वा प्रमत्तः पितृदेवनकार्येष्वृतौ स्वदारगामी न दिवा शयीत न पूर्वापररात्रौ न भूमावनन्तर्हितायामासीत नित्योदकी यज्ञोपवीती न विरहयेदाचार्यमन्यत्र नियोगादनुज्ञातो वा अहरहराचार्यमभिवादयेद् गुरुम्पश्चाममेत्य श्रोत्रियस्य प्रोष्य प्रत्येत्याश्रोत्रियस्यासावहं भो ३ इत्यात्मनो नामादिश्य व्यत्यस्य पाणी अमा/उ इत्यस्य पाणी संगृह्याऽऽशिषमाशास्ते नाव्रतो यज्ञं गच्छेद्धर्मांश्च जुगुप्सेत न जनपदमपरायां गच्छेन्नोपर्युदिशोरमेत्यानाक्रोशकोऽपिशुनोकुलंकुलनेनेहेतिस्यान्नैकश्चरेत्तथा नापिहितपाणि-

दैवायतनानि प्रदक्षिणं न धावेन्न ष्ठीवेन्न कण्डूयेन्मूत्रपुरीषे नावेक्षे-तावगुण्ठ्यासीतान्तर्हितायां धयेकवस्त्रो यज्ञोपवीतं कर्णे धृत्वा नादित्यमभिमुखो न जघने नाहरुदङ्मुखो नक्तं दक्षिणामुखो न चाप्सु श्लेष्म न च समीपेऽप्लक्षमारोहेन्न कूपमीक्षेत न धुवनं गच्छे-न्न स्नेव तु श्मशानं सचेलोऽहरहराप्लवेदाप्लुत्याप्युदकोऽन्यद्वस्त्र-माच्छादयेत् ॥ १२ ॥

रोहिण्यां कृषिकर्माणि कारयेत् पुरस्तात् कर्षणात् प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेद् द्यावापृथिवीयमपर्चा नमो द्यावापृथिवीभ्यामितिचोपस्थानं प्रथमयोगे सीरस्य ब्राह्मणः सीरं स्पृशेच्छुनं नः फाला इत्येतामनुब्रुवन् क्षेत्रस्य पतिनेति प्रदक्षिणं प्र-त्यृचं प्रतिदिशमुपस्थानम् ॥ १३ ॥

उदकं तरिष्यन् स्वस्त्ययनं करोत्युदकाञ्जलीनप्सु जुहोति समुद्राय वैणवे नमो वरुणाय धर्मपतये नमः सर्वाभ्यो नदीभ्यः सर्वासां दिशे विश्वकर्मणे दत्तं हविर्जुषतामिति जपित्वा प्रतीर्य अवन्तीभ्य उत्तीर्यस्थावराभ्यस्तरीं श्रेष्ठं शङ्खाद्याशिष्टं सूक्तं जपेत् समुद्रज्येष्ठा इत्येतत् सूक्तम् ॥ १४ ॥

श्रवणः श्राविष्ठीयायां पौर्णमास्यामक्षतसक्तूनां स्थालीपाक-[illegible] वा जुहोति विष्णवे स्वाहा श्रवणाय स्वाहा श्रावण्यै पौर्ण-मास्यै स्वाहा वर्षाभ्यः स्वाहेति धूमपाग्निं वावन उपसमाधाय लाजानक्षतसक्तूंश्च सर्पिषा संनीय जुहोति दिव्यानां सर्पाणा-मधिपतये स्वाहा दिव्येभ्यः सर्पेभ्यः स्वाहेत्युत्तरेणाऽग्निं प्रागग्रेषु नवेषु कुशेषूदकुम्भं प्रतिष्ठाप्य दिव्यानां सर्पाणामधिपतिरवनेनिक्तां दिव्याः सर्पा अवनेनिजन्तामित्यपो निनयति दिव्यानां सर्पाणाम-धिपतिः प्रलिखतां दिव्याः सर्पाः प्रलिखन्तामिति फणेन चेष्टयति दिव्यानां सर्पाणामधिपतिः प्रलिम्पतां दिव्याः सर्पाः प्रलिम्पन्तामिति

वर्णकरस्य मात्रा निनयति दिव्यानां सर्पाणामधिपतिरवनेनिक्ष्व दिव्याः
सर्पा आवध्नन्तामिति सुमनस उपहरति दिव्यानां सर्पाणामधि-
पतिराच्छादयतां दिव्याः सर्पा आच्छादयन्तामिति सूत्रतन्तुमुप-
हरति दिव्यानां सर्पाणामधिपतिराङ्क्तां दिव्याः सर्पा आङ्क्तामि-
ति कुशतरुणे पद्यान्तमाञ्जनस्य करोति दिव्यानां सर्पाणामधि-
पतिरीक्षतां दिव्याः सर्पा ईक्षन्तामित्यादर्शेनेक्षयति दिव्यानां स-
र्पाणामधिपत एष ते बलिरिति बलिमुपहरत्येवमन्तरिक्षाणां दि-
श्यानां पार्थिवानामिति त्रिस्त्रिरुच्चैस्तरामुच्चैस्तरां पूर्वं नीचैस्तरां नी-
चैस्तरामुत्तरमेवमहरहरक्षतसक्तूनां दर्वेणोपघातमाप्रत्यवरोहणात्सायं
रात्रौ वाग्यतः सोदकं बलिं हरेद्वाग्यतावेनमुपसादयेय नमस्यः स
उत्सर्गः श्रूयमाणामिति शय्यामारोहेत् ॥ १५ ॥

आश्वयुज्यां पौर्णमास्यामैन्द्रः पायसोऽश्विभ्यां स्वाहाऽश्व-
युग्भ्यां स्वाहाऽऽश्वयुज्यै पौर्णमास्यै स्वाहा शरदे स्वाहा पशुपतये
स्वाहा पिङ्गलाय स्वाहेत्याज्यस्य हुत्वाथ पृषातकस्या गावो अ-
ग्मन्नित्येतेन सूक्तेन सपृषं जुहुयान्मातृभिर्वत्सा संसृजन्ति ता रा-
त्रीमप्यब्राह्मणभोजनम् ॥ १६ ॥

आग्रहायण्यां प्रत्यवरोहेद्रोहिण्यां प्रोष्ठपदासु वा मासः शमी-
पलाशमधूकपीकापामार्गाणां शिरीषोदुम्बरबदरीणां च पूर्णमुष्टि-
मादाय सीतालोष्टं चोदपात्रे निधाय महाव्याहृतीः सावित्रीं चो-
दृत्यापनः शोशुचदघमित्येतेन सूक्तेन समभ्युक्ष्य निमृज्य म-
दक्षिणं शरणेभ्यः पाप्मानमपहरत्योत्तरतो निनयेन्मधुपर्को दक्षि-
णा ॥ १७ ॥

ग्रीष्मो हेमन्त उत वा वसन्तः शरद्वर्षाः सुकृतं नो अस्तु ते-
षामृतूनां शरशारदानां निवात एषामभये स्याम स्वाहा अपश्वेत-
पदा जहि पूर्वेण चाऽपरेण च सप्त च वारुणीरिमाः सर्वाश्च राज-

यत् किञ्चेदमिति प्रज्ञापयित्वा धेनुर्दक्षिणा वत्सयुग्मं वासो ब्राह्मणभोजनम् ॥ २ ॥

अथारामेऽग्निमुपसमाधाय स्थालीपाकं श्रपयित्वा विष्णवे स्वाहेन्द्राग्निभ्यां स्वाहा विश्वकर्म्मणे स्वाहेति यान्वो नर इति प्रत्यृचं जुहुयाद्वनस्पते शतवल्श इत्यभिमन्त्र्य हिरण्यं दक्षिणा च ॥ ३ ॥

यदि पार्वणस्त्वकृतोऽन्यतरस्ततश्चरमग्नये वैश्वानराय स्वाहाऽग्नये तन्तुमते स्वाहेति होमातिक्रमे सायंदोषावस्तर्नमः स्वाहाप्रातर्वस्तर्नमः स्वाहेति यावन्तो होमास्तावन्तो हुत्वा पूर्ववद्धोमः ॥ ४ ॥

कपोतोलूकाभ्यामुपवेशने देवाः कपोत इति प्रत्यृचं जुहुयात् दुःस्वप्नदर्शने चारिष्टदर्शने च निशायां काकशब्दक्रान्ते चान्येषु चाद्भुतेषु च पयसा चरुं श्रपयित्वा सरूपवत्साया गोः पयसि न त्वेव तु कृष्णाया रात्रीसूक्तेन प्रत्यृचं जुहुयाद्धुतशेषं महाव्याहृतिभिः प्राश्य भद्रं कर्णेभिरिति कर्णौ शतमिन्नु शरदो अन्तिदेवा इत्यात्मानमभिमन्त्र्य ब्राह्मणेभ्यः किञ्चिद्दद्यात् ॥ ५ ॥

व्याधौ समुत्थिते इमा रुद्राय तवसे कपर्दिन इति प्रत्यृचं गावेधुकं चरुं जुहुयात् ॥ ६ ॥

अकृतसीमन्तोन्नयने चेत् प्रजायेताकृतजातकर्मासीमन्तोऽनीते दशाहे उत्सङ्गे मातुः कुमारकं स्थापयित्वा महाव्याहृतिभिर्हुत्वा पूर्ववद्धोमः ॥ ७ ॥

स्थूणाविरोहणे स्थालीपाकं श्रपयित्वा यानिष्ठा अनयन् कर्वराणि विशङ्करूपः सुमरो वयोधा इति द्वाभ्यां चरुं जुहुयाद्यदि प्रणीता चरुराज्यस्थाल्यन्यदपि मृन्मयं भिन्नं स्रुवेत् सर्वमापभिव्याहुतीर्हुत्वा यज्ञे चिदिति तृचेन भिन्नमनुमन्त्रयते यद्यत् समाप्ते होमे पवित्रे नश्यते सर्वप्रायश्चित्तं हुत्वाऽप्स्वग्न इति पुनरुत्पादयेत् ॥ ८ ॥

अथ सपिण्डीकरणम् । चत्वार्युदपात्राणि पूरयित्वा पितुः प्रभृति त्रीन्पिण्डान् कल्पयित्वा, ये समानाः समनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समानाः समनसो जीवा जीवेषु मामकाः तेषां श्रीर्मयि कल्पतामस्मिँल्लोके शतं समाः समानो व इति द्वाभ्यामाद्यं पिण्डं त्रिषु विभजेत्तथैवार्घपात्राण्येवं मातुर्भ्रातुर्भार्यायाः पूर्वपारिण्या त्रिभिः पिण्डैः प्रक्षिप्य ॥ ९ ॥

यदि गृहे मधूका मधु कुर्वन्त्युपोष्यौदुम्बरीः समिधोऽष्टशतं दधिमधुघृताक्ता, मा नस्तोक इति द्वाभ्यां जुहुयाच्छम इन्द्राग्नी इति च सूक्तं जपेत् सर्वेषु च कर्मसु मतिश्रुतादिषु प्रादेशमात्रीः पालाशीः समिधः सप्तदश हुत्वा पश्चात् स्रुवग्रहणं दर्शपूर्णमासयोः पञ्चदशमभ्याधेयेष्टके तिस्रो वा भवन्ति पितृयज्ञवद्धोमः ॥१०॥

यदि गृहे वल्मीकसम्भूतिर्गृहोत्सर्गोऽथ त्रिरात्रमुपोष्य महाशान्तिं कुर्यान्महाशान्तिं कुर्यात् ॥ ११ ॥ इति गृह्यसूत्रे पञ्चमोऽध्यायः ॥ ५ ॥

अथातो ब्रह्माणं ब्रह्मर्षिं ब्रह्मयोनिमिन्द्रं प्रजापतिं वसिष्ठं वामदेव्यं कहोलं कौषीतकिं महाकौषीतकिं सुयज्ञं शाङ्खायनमाश्वलायनमैतरेयं महैतरेयं कात्यायनं शाट्यायनं बभ्रुं बाभ्रव्यं मण्डुं माण्डव्यं सर्वानेव पूर्वाचार्यानिष्ट्वा स्वाध्यायारण्यकस्य नियमानुदाहरिष्यामोऽहोरात्रं ब्रह्मचर्यमुपेत्याचार्योऽवासाश्चीपपिहितं चण्डालं सूतिकां रजस्वलान्तेदनिपमहस्तकदर्शनान्यनध्यायकानिश्वरूपाणां च पान्यास्येन मविशेषुर्वान्तकृतश्मश्रुकर्ममांसाशनश्राद्धसूतकभोजनेषु ग्रामाऽध्ययनानन्वाहितान्यहानि त्रिरात्रो नवकर्मसु पराभिवृष्ट उपपर्वणापद्ध उत्तराद्धानि ग्राम्नाविद्युत्स्तनयित्नुवर्षामहाभ्र-

प्रादुर्भावाच्च वाते च शर्कराकर्षणि यावत्कालम् ॥ १ ॥

ऊर्ध्वमापःक्व। श्चतुरो मासान्नाधीयीतात्यन्तं शक्य इति नियमाः प्राग्ज्योतिषमपराजितायां दिशि पुण्यमुपगम्य देशमनुदित उदग्ग्रहणं मण्डलप्रवेशश्चाञ्जनगन्धिमित्येतयर्चा मण्डलं तु प्राग्द्वारमुदग्द्वारं वा जनाग्नीयमसम्प्रमाणमसंवात्रमावामदेव्यमुत्तरशान्तिः । पुनः आप्येषणं च मण्डलस्थाभिराचम्य प्राधीयीरन् कृतशान्तयः शान्तिपात्रोपयाते मोक्षणं प्रायश्चित्तिः मोक्षणं तु हिरण्यवता पाणिना दर्भपिञ्जूलवता वेति भाष्यिकम् ॥ २ ॥

अथ प्रविश्य मण्डलं प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे. यथाप्रधानमप्रभवेत्समर्धनोमुखा प्रतीक्षेरन्नुदयमादित्यस्य विज्ञाय चैनं दीधितिमन्तमधीहि भो३ इति दक्षिणैर्दक्षिणसव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्यस्य निर्णिक्तावथाधाय शान्तिपात्रे दूर्वाकाण्डवतीष्वप्स्वाविन्नमानैः पाणिभिः प्राधीयीरन्नेष विधिर्यद्धि तु ग्लायेरन्नेक एषामशून्यं शान्तिभाजनं कुर्यादध्यायार्धन्तयोश्च सर्वे तस्मन्तमव्यवच्छिन्नं भवत्यपरशान्तिरोंकारो महाव्याहृतयः सावित्री रथन्तरं बृहद्वामदेव्यं पुनरादायं स्कुप्कारमिति बृहद्रथन्तरे दर्शिताः सम्पादिता भवन्ति दशाद्ग्निनीतिराळित्येतद्ब्राह्मणम् ॥ ३ ॥

अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मां हिंसीरिति सवितारमीक्षन्ते युवं सुरामप्रिक्षेका स्वस्ति नः पथ्या- [illegible]

इति प्रपाठकि वीरत्सुरित्यभितशक्करीणामथोपनिषदां यैर्यं पदाग्रवस्य संहितानां तु पूर्वम् एकजं वदिष्यामि सत्यं वदिष्यामीति

मादुर्भावाच वाते च शर्कराकर्षणि यावत्कालम् ॥ १ ॥

ऊर्ध्वमाषाढ्या श्चतुरो मासान्नाधीयीतात्यन्तं शक्य इति नियमाः प्राग्ज्योतिषमपराजितायां दिशि पुण्यमुपगम्य देशमनुदित उदग्ग्रहणं मण्डलप्रवेशश्चाज्ञनगन्धिमित्येतयर्चा मण्डलं तु प्राग्द्वारमुदग्द्वारं वा अनाग्नेयमसत्प्रमाणमसंवासमावामदेव्यमुत्तरशान्तिः । पुनः प्राश्येण च मण्डलस्याभिराचम्य माध्वीरिन्द्र कृतशान्तयः शान्तिपात्रोपघाते मोक्षणं प्रायश्चित्तिः मोक्षणं तु हिरण्यवता पाणिना दर्भपिञ्जूलवता चेति भाविकम् ॥ २ ॥

अथ प्रविश्य मण्डलं प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे यथाप्रधानमसम्भवेत्सर्वतोमुखा प्रतीक्षेरन्नुदयमादित्यस्य विज्ञाय चैनं दीधितिमन्तमधीहि भो३ इति दक्षिणैर्दक्षिणसव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्यस्य निर्णिक्तावथाधाय शान्तिपात्रे दूर्वाकाण्डवतीष्वप्सुवित्रमानैः पाणिभिः माध्वीरनेय विधिर्यदि तु ब्रूयेयरन्नेकं एषामशून्यं शान्तिभाजनं कुर्यादध्यायाद्यन्तयोश्च सर्वे तदनन्तमप्यवच्छिन्नं भन्नस्यपशान्तिरोंकारो महाव्याहृतयः सावित्री रथन्तरं बृहद्वामदेव्यं पुनरादाय ककुप्कारमिति बृहद्रथन्तरे दर्शिताः सम्पादिता भवन्ति दशद्गिनीविराळित्येतद्ब्राह्मणम् ॥ ३ ॥

अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीरिति सवितारमीक्षन्ते युवं सुराममिसेका स्वस्ति नः पथ्या-
[illegible]
[illegible]
इति यत्राग्नि वीरयुरित्यभितशक्वरीणामयोपनिषदा येषं महानदस्य संहितानां तु पूर्वम् । ऋतं वदिष्यामि सत्यं वदिष्यामीति

# विज्ञापनम् ।

## बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्येऽपि विद्वांसः शोधयन्ति । येर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ॥) मूल्यं मापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं मापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३। द्वितीयभागः तृतीयकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| अथर्ववेदीयशौनकप्रातिशाख्य सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | |
| विवरणोपन्यासः सटीकवाक्यसुधासहित० खण्डे २ | १ | |

बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजा पशून्नमो नमस्कृता वर्द्धयन्तु दुष्टु- ताद्दुरूपयुक्तान्यूनाधिकाच सर्वस्मा स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्य च पातु मामिति ब्रह्म सत्यं च पातु मामिति ॥ ६ ॥

इति शाङ्खायनशाखायाः कौपीतकिगृह्यसूत्रे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

समाप्तोऽयं ग्रन्थः ॥ इदमेव कौशिकसूत्रम् ॥



# विज्ञापनम् ।

बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । येग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैरेतदेकैकस्य खण्डस्य कृते ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यानि कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

## तत्र मुद्रिता ग्रन्थाः ।

| | र० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीत शुक्लयजुःप्रातिशाख्यम् सभाष्यं खं०६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ (प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहिते खण्डानि ३। द्वितीयभागः तृतीयकाण्डम् हेलाराजटीकासहितं खण्डानि ३) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ४ |
| शिक्षासङ्ग्रह खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीत शुक्लयजुःसर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्पयो नमस्कृत्वा वर्द्धयन्तु दुष्टु-तादुरूपयुक्तान्यूनाधिकाच्च सर्वस्मा स्वस्ति देवकोप-पद्म ब्रह्म सत्यं च पातु मामिति ब्रह्म सत्यं च पातु मामिति ॥ ६ ॥

इति शाङ्खायनशाखायाः कौषीतकिगृह्यसूत्रे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

समाप्तोऽयं ग्रन्थः ॥ इदमेव कौशिकसूत्रम् ॥



# विज्ञापनम् ।

बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । येग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैरतदेकैकस्य खण्डस्य कृते ।॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

## तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | २ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख०६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३। द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्ति खण्डे २ | २ | ० |
| वैशेषिकदर्शने किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुःसर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्य सभाष्यम् खण्डानि ४ | ४ | ० |
| (वृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यास. सटीकवाक्यसुधासहित. खण्डे २ | १ | ० |

बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशुन्नमो नमस्कृता वर्द्धयन्तु दुष्टु-
तादुरूपयुक्तान्यूनाधिकाच्च सर्वस्मा स्वस्ति देवऋषिभ्यश्च ब्रह्म
सत्यं च पातु मामिति ब्रह्म सत्यं च पातु मामिति ॥ ६ ॥

इति शाङ्खायनशाखायाः कौषीतकिगृह्यसूत्रे षष्ठोऽध्यायः
समाप्तः ॥ ६ ॥

समाप्तोऽयं ग्रन्थः ॥ इदमेव कौशिकसूत्रम् ॥



# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् समाप्तं ख०६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३ । द्वितीयभागः तृतीयकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुःसर्वानुक्रमसूत्रम् समाप्तम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं समाप्तम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

